॥ श्रीः ॥

पंचनदीघनश्यामभट्टात्मजवेदान्तभट्टाचार्यभट्ट-
गोवर्धनशर्मश्रींगट्टूलालविरचितो

# वेदान्तचिन्तामणिः ।

स च

गोस्वामिकुलकौस्तुभ १०८ श्रीगोकुलनाथमहाराज-
चरणानां निदेशेन
भट्टरमानाथशर्मणा शुद्धाद्वैतभूषणेन
टिप्पण्या परिष्कृत्य शोधितः

संवत् १९७५. सन १९१८.

१) मूल्यमेको रूप्यकः ।

॥ श्रीहरिः ॥

भारतमार्तण्डवेदान्तभट्टाचार्याऽऽशुकविभट्टश्रीगोवर्धनशर्म-
विरचितो

# वेदान्तचिन्तामणिः ।

स च

गोस्वामिकुलकौस्तुभश्री १०८ श्रीगोकुलनाथ-
देशिकेन्द्राणामाज्ञया

साहित्यरत्नवेदान्तभूषणमहामहोपदेशकशुद्धाद्वैतभूषणेन

भट्टरमानाथशर्मणा

टिप्पण्या परिष्कृत्य संशोधितः ।

१९७५ अब्दे ४३८ वल्लभाब्दे वा सन् १९१८,

श्रीमद्बालकृष्णविद्यालयात् प्रकाशितश्च ।

॥ श्रीहरिः ॥

# अस्ति किञ्चिद्वक्तव्यम् ।

प्रादुरासन्किल भगवतः परमपुरुषस्याज्ञया दक्षिणापथे पाखण्डमतखण्डनपण्डितपुण्डरीका भगवद्वदनापराऽवताराः श्रीमद्वल्लभाचार्यदेशिकेन्द्रा इत्यतिरोहितमिदानीं विपश्चिद्भारतीयानाम् । तदाज्ञयैव तज्जातीया बहवो विद्वदग्रेसरा यजुरधीतिनो वेल्लनाटीब्राह्मणा विमुच्य तद्देशं सगृहा इहोत्तरादिदिग्देशेषु समागत्य न्यवसन् । इहत्यास्तु तेषामखिलानां मतिमहद्वैदुष्यमवलोक्य सर्वानपि तान्भट्ट इत्युपपदेन संकीर्त्य महता सम्मानेन पुरोजगृहुः । साङ्गसदर्शननिगमपारदृश्वनामप्येतदुपपदं भट्ट इत्यधुना कालवशात्प्रसिद्धिवशाद्वा जातितामधितिष्ठति । हन्तैतत् । श्रूयते त्रैगुण्यस्वभावादेवैतेषां जातो द्वयेन विभागः गोकुलस्थो मथुरास्थ इति । यद्यपि सन्ति कतिपये तथा अपि भट्टा ये श्रीमद्वल्लभाचार्येभ्योऽपि पूर्वं वृत्तिवशात्कार्यवशाद्वा देशेष्वेष्वागत्य वसन्ति स्म तथापि त एत इदानीं भागद्वय एवान्तः क्रियन्ते प्रसिद्ध्या । वैदुष्यपित्रे प्रत्यहं निवापाञ्जलिं ददत्स्वप्येतेषु भवन्ति यदृच्छया कतिपये तथाविधा अपि महात्मानो यैरात्मवैदुष्यमहामहिम्ना पुनरप्यवदातीक्रियते वंशो नाम जातिश्च । एवंविधेष्वेव महाभागेषु निखिलभारतभारतीवैभवो विद्वत्प्रकाण्डो भारतमार्तण्डः पंचनदी श्रीमान् गोवर्धनशर्माऽऽसीत् । स्नेहनाम्ना तु प्रसिद्धः पण्डितगट्टूलाल इति । अयं हि वैक्रम एकाधिकैकोनविंशे शरदि कच्छप्रदेशे लब्धजन्मा । वैयाकरणधुरीणो गोकुलस्थो भट्टश्रीघनश्यामशर्माऽस्य

जनकः । जननी च गो.श्रीव्रजवल्लभमहाराजानां पुत्री श्रीमती लाडूबेटी । बाल्य एवाऽस्य प्रतिभा मेधा च लोकाश्चर्यकरी श्रूयते । श्रूयते चैतेन महामतिनाऽष्टवर्षीयेण बटुनैव रुक्मिणीचम्पूर्निर्मिता । व्याकरणन्यायमीमांसावेदान्तकाव्यादिषु विस्मयकरः पण्डितप्रकाण्ड आसीदित्यस्य मारुतशक्तिवेदान्तचिन्तामण्यादिग्रन्थान्विलोक्य मतिर्निश्चिता भवति । वैक्रमसार्धैकोनविंशशतकात्पूर्वमेवाऽस्य शतावधानशास्त्रार्थकवितादिभिर्यशोवितानं व्यतानि समग्रेऽपि भारते । काशीकलिकातादिनगरेषु संसदि महामहोपाध्यायमहेशचन्द्रशिवकुमारगङ्गाधरादिविपश्चिदपश्चिमान्स्ववैदुष्येण संतोष्य वेदान्तभट्टाचार्यभारतमार्तण्डशीघ्रकविप्रभृतीन्युपपदानिसादरमुपलेभे, राज्ञां च भूयसां सम्मानमवाप । कृष्णगढनरेशेन संतुष्य स्वर्णवेत्रं व्यतार्यस्मै । प्रायः सर्वेष्वपि शास्त्रेष्वनेन निबन्धा व्यरच्यन्त । किन्तु निःसन्तानतया प्रबन्धकाभावेन बहुशो विलयं गताः। भूयांस एवाऽस्यान्तेवासिनो विद्वद्धुरीणा आसन्सन्ति च । तन्मुखेन ज्ञातास्त्वस्यैते ग्रन्थाः ।

| | |
|---|---|
| १ उपनिषदां भाष्याणि | अस्मद्दृष्टिगोचरं गतास्त्वेवम् । |
| २ श्रीमद्भगवद्गीताटीका | १ मारुतशक्तिः |
| ३ शुद्धाद्वैतचन्द्रोदयः | २ सत्सिद्धान्तमार्तण्डः |
| ४ रुक्मिणीचम्पूः । | ३ वेदान्तचिन्तामणिः |
| ५ अणुभाष्यटिप्पणम् | ४ कृष्णाभिसारः |

५ कृदन्तव्यूहः ६ निबन्धप्रकाशावरणभङ्गटीका सत्स्नेहभाजनम् ।

तत्राऽस्मन्मुद्रापितोऽयं वेदान्तचिन्तामणिरस्य महतीं कविताशक्तिं निखिलदर्शनप्रतिष्ठितपाण्डित्यं च सरलं बोधयति । विद्यारण्यस्वामिनिर्मितां पंचदशीं विलोक्य तत्सदृशोऽयं तेन पंचदशप्रकरणात्मकः प्रबन्धो

विरचित इति मन्ये। अस्मिन्हि प्रथमे प्रकरणेऽस्ति कश्चन सर्वधर्मविशिष्टः परमात्मा सर्वकर्तेति युक्तयाऽनुमानैश्च विविधैर्नास्तिकोच्छेदाय साधितम्।

द्वितीये श्रीमद्वल्लभाचार्यप्रादुर्भावितेऽस्मच्छुद्धाद्वैतवेदान्ते तु ब्रह्माद्यलौकिकविषयेषु वेदगीताब्रह्मसूत्रश्रीभागवतं तदनुसारीणि चान्यान्यपि शास्त्राणि प्रमाणानीत्येवमेकं शाब्दमेव प्रमाणमिति महता विवेकेन सरलाभिश्च युक्तिभिर्विवेचितम्। संसारगतिनिरूपणञ्च।

तृतीये सच्चिदानन्दांशानां जडजीवाऽन्तर्यामिणां विविच्य प्रदर्शनम्। तेषां ब्रह्मणा सहैक्यञ्च।

चतुर्थे प्रपञ्चसत्यत्वनिरूपणम्। तत्रैव श्रुतिसूत्रगीताश्रीभागवतान्यपुराणादिप्रमाणानामुपन्यासः। तद्विषये परपक्षनिरूपणं तत्पराहतिश्च।

पञ्चमे युक्त्या पूर्वोक्तसमर्थनम्। तत्रैव चोदाहरणप्रदर्शनम्। आविर्भावतिरोभावयोर्नामरूपव्याकरणप्रदर्शनपूर्वकं निरूपणम्।

षष्ठे— विकृतपरिणामवादादीनां खण्डनमविकृतपरिणामवादस्य च श्रुतियुक्तिभिः समर्थनम्।

सप्तमे जीवानामुद्गमो भगवदिच्छया चाऽविद्ययैवाऽहंताममतारूपः संसारो लग्न इति विविच्य वर्णनम्।

अष्टमप्रकरणे जीवान्तर्यामिनिरूपणम्। तत्र जीवो भगवतोंऽशः। अणुः प्रसारिचैतन्यगुणयुक्तः परतन्त्रःकर्ता। भगवदिच्छयाऽविद्यया बद्धः। न प्रतिबिंबः किन्तु भगवदंशोऽक्षररूपः। अन्तर्यामी तु सर्वज्ञः सर्वप्रेरकः सर्वाऽविज्ञात आनन्दरूपः कर्ता निर्विकार इत्यादिविषयः श्रुति-

स्मृतिसूत्रगीताश्रीभागवतयुक्तिभिर्महता प्रकारेण लघुना च समर्थितः।

नवमे प्रतिबिम्बत्वादिपराभिमतानां मतानां भाष्यविद्वमण्डनाद्याकरग्रन्थानुसारिप्रमाणयुक्तिभिः खण्डनं विहितम् ।

दशमे ब्रह्म सधर्मकमिति, ततश्च तद्धर्माणां तच्छक्तीनां च नित्यत्वं ब्रह्मरूपत्वं भिन्नाभिन्नत्वं च तैरेव प्रमाणैर्विवेचितम् । तत्तद्विषये च परतत्वान्वेषणं तदपहतिश्च ।

एकादशे प्रसङ्गागतं भेदवादिश्रीरामानुजमतं समालोचितम् । इदमपूर्वमनेन कृतमिति मे मतम् । अस्मदृष्टेषु भाष्याद्याकरग्रन्थेषु न दृश्यत एतन्मतसमालोचनमेवम् ।

द्वादशे शैवशाक्तमतखण्डनकरणम् ।

त्रयोदशे जगदक्षरान्तर्यामिपुरुषोत्तमादिरूपभेदेपि शुद्धं ब्रह्माऽद्वैतमिति गङ्गादिदृष्टान्तैः प्रमाणैश्च श्रुत्यादीनां साधितम् ।

चतुर्दशे प्रकृतिपुरुषविवेकदिग्दर्शनं भगवद्धामात्मकाक्षरब्रह्मणो विस्तृतं वर्णनम् ।

पंचदशे पूर्वोक्तप्रकरणविषयाणां समुच्चयः । तत्र पूर्वं भगवतो लीला लीलापरिकरश्च भगवदात्मक इति समर्थनम् । तत्र वेदादीनां प्रमाणम् । जीवानां संसारगतिः । संसारान्मुक्तौ भक्तेरेव साधनत्वम् । भक्तेः स्वरूपम् ।

मुक्तिस्वरूपम् । स्वतन्त्रभक्तानां मुक्तेरप्यधिकं फलम् ।

परमानुगृहीतभक्तस्यानन्दमयो नित्यो देहः । भगवत्प्रेम्ण्यनुग्रह एव परमं साधनम् । शरणात्मनिवेदनयोर्निरूपणम् । आचार्यकरणे वेदा-

दिप्रमाणम् । सेवासाधनादिवर्णनम् । वैष्णवाचारः । इत्यादि बहूनां विषयाणामुपन्यासः ।

## विशेषतो द्रष्टव्यम् ।

भारतमार्तण्डविरचिताः प्रायः सर्वेऽपि ग्रन्था बृहन्मन्दिराधीश्वरैः श्रीजीवनलालगोस्वामिचरणैरेव मुद्रापिताः । अयं वेदान्तचिन्तामणिश्च तथा । अत्र गोकुलस्थभट्टश्रीदेवकीनन्दनमहोदयेन विदुषा टिप्पणं विरचितं विद्यते किन्तु तद्विरलमिति भूयःस्थलेषु तदपेक्षाऽतिशयिताऽऽसीत्संदिग्धश्चेति मया पुनरेतद्विशदीकृत्य प्रवर्द्धितमिति विदांकुर्वन्तु विद्वांसः ।

श्रीमद्बालकृष्णविद्यालयच्छात्राणामध्ययनाय च विद्यैकजीवनगोस्वामिकुलकौस्तुभश्री १०८ श्रीगोकुलनाथचरणानां निदेशेन चाऽस्य पुनर्मुद्रणं जातमिति ।

भट्टश्रीरमानाथः

श्रीहरिः शरणम्

# वेदान्तचिन्तामणिः ।

भारतमार्त्तण्डवेदान्तभट्टाचार्य्येत्याद्यनेकविरुदोपशोभित-
पण्डितश्रीगट्टूलालापरनामश्रीगोवर्द्धनभट्टप्रणीतः ।

## तत्र नास्तिक्योच्छेदो नाम प्रथमं प्रकरणम् ।

शुद्धाद्वैतं सर्वशक्तिं जडजीवादिकारणम् ।
साकारं सच्चिदानन्दं वन्दे श्रीपुरुषोत्तमम् ॥ १ ॥

मायावादतमोनाशभक्तिमार्गप्रकाशयोः ।
सूर्याचन्द्रमसौ स्तौमि श्रीमद्वल्लभविठ्ठलौ ॥ २ ॥

भक्तो गुरुश्रीव्रजवल्लभस्य
पितुर्घनश्यामत आप्तविद्यः ।
गोवर्द्धनो बालनिबोधनाय
वेदान्तचिन्तामणिमातनोति ॥ ३ ॥

अथैतद्विश्वमखिलं नानारूपं निरीक्ष्यते ।
अतीव चित्रमेतस्य कारणं परिचिन्त्यताम् ॥ ४ ॥

---

प्रणम्य श्रीमदाचार्यचरणांस्तत्सुतानपि ।
कुर्वे स्वल्पीयसीं प्राचां टिप्पणीं विशदाशयाम् । १ ।

१—अत्र प्रकरणे ब्रह्मास्तित्वसाधनेऽनुमानं युक्तयश्च प्रमाणत्वेनोपन्यस्ताः । तत्तु परस्वीकृतमेव नास्तिक्योच्छेदाय न पुनर्वास्तवं ब्रह्मणि प्रमाणमिति ज्ञेयम् । ब्रह्मणोऽलौकिकत्वात् । वेदैकवेद्यत्वाच्च ।

यत्पूर्ववृत्ति नियतं यदुत्पत्तावपेक्ष्यते ।
तत्तस्य कारणं[1] प्रोक्तं कार्यमुत्पाद्यमस्य यत् ॥ ५ ॥
यथा मृत्सा कुलालश्च दण्डादिर्घटकारणम् ।
तथेदं किमुपादाय केन वा निर्मितं भवेत् ॥ ६ ॥
चेतनस्य मनुष्यादेः पितरौ[2] तत्तथाविधौ[3] ।
जडस्याऽप्यथ वृक्षादेर्बीजाद्यं यद्यपि स्फुटम्[4] ॥ ७ ॥
पित्रोः पितामहौ मातामहौ तेषां तथेतरे[5] ।
एवं विचारे को वाऽऽदौ किञ्च सर्गोऽस्ति मैथुनात् ८
किमादौ पुरुषः स्त्री वोभयं वेत्यपि संशयः ।
एवं जडेऽपि वृक्षस्य[6] बीजं तत्फलतः फलम् ॥ ९ ॥
वृक्षाद्वृक्षाङ्कुरं बीजात्तरुर्वा[7] बीजमादिमम् ।
नाऽध्यवस्यति धीः किञ्चिदन्ततः परिचिन्तने ॥ १० ॥
तस्मात्सर्वप्रपञ्चस्य निदानं ब्रह्म केवलम् ।
आदित्वादद्वितीयत्वात्सर्वरूपत्वशक्तितः[8] ॥ ११ ॥

---

१—कारणम् । तच्च द्विविधम् । समवायि—तादात्म्यं वा निमित्तं च । विलक्षणतादात्म्यसंबंधेन यदाश्रयं कार्यमुत्पद्यते तत्समवायिकारणम् । तद्भिन्नं तु निमित्तम् । यत्तु ग्रन्थकर्त्रा कारणं निरूपितं तत्तु कारणस्वरूपम् । न लक्षणम् । २—कार्यानुरूपौ—कार्यमेवेत्यर्थः । ३—कारणमितिशेषः । ४—कारणमिति शेषः । ५—कारणमिति शेषः । ६—बीजम् । ७—एवमन्ततः परिचिन्तने 'तरुर्बीजं वाऽऽदिम'मिति धीः किंचित् न अध्यवस्यति । ८—सर्वरूपत्वं शक्तिर्यस्य सः । तस्मात् ।

सर्वधर्मविशिष्टत्वादैश्वर्यात्तत्प्रसिद्धितः[1] ।
स्वयमेव स्वेच्छयेदं स्वरूपादुदपादयत् ॥ १२ ॥
यथोर्णनाभिर्लालात आलयं सृजतीच्छया ।
पात्यत्त्येवं त्वस्य सृष्टिस्थितिसंहृतयस्ततः ॥ १३ ॥
पञ्चभूतात्मकं[2] सर्वं किं न तान्येव कारणम् ।
निरास्पदत्वं[3] नैषां चोचितो योगः स्वतो यतः ॥ १४ ॥
कालजीवादयो नैतन्मयास्तेषां कुतो भवः ।
किञ्च पञ्चैव तान्येवंस्वभावान्येव वा कुतः ॥ १५ ॥
अतोऽवश्यं सर्वबीजं स्वतन्त्रश्चैक ईशिता ।
प्रवर्त्तको नियन्ता च यो हेतुः स्थितिनाशयोः ॥ १६ ॥
तद्ब्रह्म क्वाऽस्ति सर्वत्र व्याप्तं व्योमेव हृद्यपि ।
कस्मान्न दृश्यतेऽस्माभिस्तिरोभूय यतः स्थितम् ॥१७॥
घर्मं न नाशयेद्वायुस्सन्नप्यारुद्धकन्दरे ।
व्यजनेनाऽनुभूयेत तथा ज्ञानेन दृश्यते ॥ १८ ॥
घटादिर्न विलोक्येत तिरस्करणिकावृतम् ।
मायाजवनिकाच्छन्नं तथा ब्रह्म न लक्ष्यते ॥ १९ ॥
अस्त्येव[4] तत्पिकाः काकाः शुका हंसाः कलापिनः ।
असिता हरिताः श्वेताः कृता येन च चित्रिताः ॥ २० ॥
परस्परविरुद्धस्याऽतिविचित्रस्वरूपिणः ।
यद्विश्वस्योद्भवे हेतुर्नियमेन यथोचितम् ॥ २१ ॥

---

१—सर्वमतेषु तथा प्रसिद्धेः । २—पूर्वपक्षः । ३—उत्तरपक्षः ।
४—तद्ब्रह्म अस्त्येवेति पूर्वेणाऽन्वयः ।

सूर्य्यादीनां सुदुर्ज्ञेययाथात्म्यानां प्रकाशनम् ।
निराधारे स्थितिर्या[1]तिर्नियता नित्यता यतः[2] ॥ २२ ॥
एवंविधैः श्रुतैर्दृष्टैः प्रकारैर्बहुभिः स्फुटैः ।
स्थिरेण मनसा स्पष्टं ब्रह्म निश्चीयतां दृढम् ॥ २३ ॥
कुसुमाञ्जलिमुख्येषु ग्रन्थेष्वीशेऽनुमाशतम् ।
अदर्श्युदयनाचार्यादिभिस्तेनोदितं यथा ॥ २४ ॥
'[3]कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः ।
वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः' २५
जडं भूतादिकं जीवान्सृष्ट्वाऽन्य[4]दपि भूततः ।
न्यूनाधिकत्वतो देहाश्चित्रा नानाविधाः कृताः ॥२६॥
तेषु जीवा[5]दि संस्थाप्य माययाऽमोहयत्स्वया ।
मोहिता न विजानीमो ब्रह्म किं कीदृशो वयम् ॥२७॥

---

१—गतिः । २—तथैव पूर्वेणान्वयः । ३—कार्यादिभ्यो हेतुभ्यः । तत्र कृतिजन्यं **कार्यम्** । सर्गाऽऽद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म **आयोजनम्** । गुरुत्ववतो ब्रह्माण्डादेः पतनाभावो **धृतिः** । आदिपदात् तस्यैव नाशोऽपि ग्राह्यः । घटादिपदप्रयोगः **पदम्** । वेदजन्यं धर्मादिज्ञानं **प्रत्ययः** । वेदाः **श्रुतिः** । पदसमूहो **वाक्यम्** । सर्गादौ परमाणुनिष्ठद्वित्वादिसंख्याजन्यं परिमाणमित्यादि **संख्याविशेषः** । प्रयोगास्तु 'क्षित्यङ्कुरादि जगत् बुद्धिमदेककर्त्तृजन्यं कार्यत्वात् घटवदि'त्यादय आकरादौ द्रष्टव्याः । ४—अन्तर्यामिप्रभृति । ५—**पार्थिवानां शरीराणामर्द्धेन पृथिवी मत**त्यादिवचनैः पञ्चीकरणप्रक्रिया द्योतिता । ६—आदिशब्देन प्राणेन्द्रियादीनां संग्रहः ।

श्रुतिष्वपि पुराणेषु ब्रह्मादीनां भवस्ततः ।
बहुधा मानवादीनां सर्गोऽस्तीत्यवधार्यताम् ॥ २८ ॥

एवं सृष्ट्वा प्रवृत्त्यर्थं मर्यादां पापपुण्ययोः ।
सर्वाञ्ज्ञापयितुं चाऽन्यद्वेदा[1] आविष्कृताः स्वतः॥२९॥

सोपाया[2] सफला कर्ममर्यादा तत्र रूपिता ।
ज्ञानार्थं स्वस्वरूपञ्च मुक्तिर्भक्तिश्च दर्शिता ॥ ३० ॥

इदं यः सुकृतं कुर्यात्स इदं सुखमाप्नुयात् ।
इदञ्च दुष्कृतं कृत्वेदं भुञ्जीत स दुष्फलम् ॥ ३१ ॥

वेदेषु विद्यमानेषु विविच्योपदिशत्स्वपि ।
यथा यथा यः कुरुते ददात्यस्मै तथा तथा ॥ ३२ ॥

कर्मानुसारतो वंशो देहो विद्या च वैभवः ।
इत्यादि प्राप्यते सर्वं प्राप्तदेहादिसंभवैः ॥ ३३ ॥

कर्मभिश्चाऽपरं सर्वं तज्जैस्तैश्चाऽन्यदाप्यते ।
बहुपापास्तु नरकं बहुपुण्याः सुरालयम् ॥ ३४ ॥

गच्छन्ति यातनादेहं पुण्यदेहञ्च संश्रिताः ।
तत्र भुक्त्वा भुवं याताः प्राप्नुवन्ति तथाऽखिलम्॥३५॥

अखण्डो[3]ऽनन्तो[4] एतादृक् प्रवाहोऽयं प्रवर्त्तते ।
यथा प्रावृड्जलैर्नद्याः प्रवाहो ह्यपराहतः ॥ ३६ ॥

---

१—स्वस्वरूपकर्मज्ञानभक्त्यादिकम् ।　　२—प्रायश्चित्तादिरुपायः ।
३—अविच्छिन्नः । ४—समाप्तिशून्यः ।

जगदीशस्य लीलाऽयं प्रपञ्चो निखिलो मतः ।
मृत्पुत्तलेषु राजानममात्यमनुगादिकम् ॥ ३७ ॥
यथा बालः करोत्येवमत्रेशोऽपि निजेच्छया ।
क्वचित्सख्यं क्वचिद्वैरमित्याद्यप्यखिलं तथा ॥ ३८ ॥
बहुप्रपञ्चा दृश्यन्ते क्रीडा बुद्धिबलादयः[1] ।
साश्चर्या अपि जीवानां यद्यल्पविषया अपि ॥ ३९ ॥
विश्वं त्वनन्तविषयमीशक्रीडात्मकं तदा ।
अकुञ्चितप्रपञ्चञ्च साश्चर्यं न कुतो भवेत् ॥ ४० ॥
केषाञ्चिद्दारुखण्डानां नाम भूपादि कथ्यते ।
निर्धारिताश्च गतयस्तत्षट्कस्यैव काश्चन ॥ ४१ ॥
आधारोऽपि चतुःषष्टिनिलयोऽकारि नागरैः ।
विधीयते युद्धमात्रं यदि तत्राऽप्यनन्तता ॥ ४२ ॥
तदाऽत्र किमु वक्तव्यं प्रपञ्चे भगवत्कृते ।
तद्वदत्राऽप्यथाऽधारो ब्रह्माण्डानि बहूनि तु ॥ ४३ ॥
पाञ्चभौतिकपिण्डानां संज्ञा नानाविधाः कृताः ।
अनेकेषामिन्द्रियतः कृता नाना प्रवृत्तयः ॥ ४४ ॥
प्रवृत्तिजन्यकार्याणि मानसान्यपि भूरिशः ।
सदसत्कर्मभिर्बह्व्यो गतयोऽपि विनिश्चिताः ॥ ४५ ॥
लीलार्थमीश्वरत्वार्थमचिन्त्यानन्तशक्तिना ।
स्वरूपात्स्वेच्छया तेन प्रपञ्चः प्रकटीकृतः ॥ ४६ ॥

---

१—शतरंज इति भाषा ।

अहंताममताबद्धा मायया्ऽन्धास्तदिच्छया ।
सर्वं एव प्रवर्त्तन्तेऽत्र परम्परयोक्तया ॥ ४७ ॥
तदंशा अखिला देवाः सकामा आश्रयन्ति तान् ।
तत्तद्ददाति तद्द्वारा तेभ्यो माहात्म्यबुद्धये ॥ ४८ ॥
यस्तु सम्यग्विजानीयात्स संसाराद्विमुच्यते ।
सर्वात्मना भजेद्योऽस्य न किञ्चिदपि दुर्लभम् ॥४९॥
गर्भेऽवनान्मातृदुग्धादिना चोपकृतं बहु ।
येनेशः सदयाम्भोधिर्हरिः कस्मान्न सेव्यते ॥ ५० ॥
स च स्वल्पेन सन्तुष्येत्स्वस्याऽपि स्यात्सुखं यतः ।
ऐहिकामुष्मिकं मोक्षः सुलभो यदि वाञ्छ्यते ॥५१॥
यतन्ते मनुजा लोके राज्ञोऽपि हि समागमे ।
समागमेऽखिलेशस्य यतितव्यं कुतो न वा ॥ ५२ ॥
समागमोऽस्य ज्ञानेन तज्ज्ञानं वेदशास्त्रतः ।
समीपस्थगिरा राज्ञोऽपि प्रकृत्यादि बुद्ध्यते ॥ ५३ ॥
वेदस्य दुर्विबोधत्वाल्लोकानुग्रहकारिभिः ।
ईश्वरानुज्ञयोक्तानि सच्छास्त्राणि मुनीश्वरैः ॥ ५४ ॥
वेदार्थ एव बोधार्थं सच्छास्त्रेषु विविच्यते ।
मन्तव्या सावधानैर्वाग्वेदशास्त्रमयीशितुः ॥ ५५ ॥
ऋते गुरुं तयोरर्थौ मननार्हौ न बुध्यते ।
परम्पराप्राप्तविद्योऽतः कश्चित्सद्गुरुर्गतिः ॥ ५६ ॥

वेदज्ञानाद्गुरुप्राप्तादुपदेशपुरःसरात् ।
केवलाद्वोपदेशाच्चेद्भजेत्तुष्येत्स नाऽन्यथा ॥ ५७ ॥

शीघ्रतद्दर्शकान्प्राप्य महामन्त्रान्सतो गुरोः ।
वेदार्थेऽथ परिश्राम्येच्छक्त्याऽऽसक्तो हरिं भजेत् ॥५८॥
गुर्वाज्ञया सानुरागं सश्रद्धं पुरुषोत्तमम् ।
शुद्धभावो भजेन्नित्यं यथाशक्त्युपचारतः ॥ ५९ ॥
लोकेऽपि शरणायातान्सर्वस्वविनिवेदकान् ।
यदि तुच्छोऽपि बलवान् कथञ्चिदपि न त्यजेत् ॥६०॥
तर्हि यः सद्गुरुद्वारा तमेकं शरणं व्रजेत् ।
सर्वं समर्पयेत्तस्मै कथं त्यक्ष्यति तं प्रभुः ॥ ६१ ॥
योगिनामपि दुर्दर्शः साक्षाद्यावन्न दृश्यते ।
शुद्धरूपादिबुद्ध्यर्थं तावत्तत्प्रतिमार्चनम् ॥ ६२ ॥
तत्राऽऽविश्य स्थितो [1]मन्त्रवशो गृह्णाति सोऽर्पितम् ।
भक्तानां त्वथ तत्रैव साक्षादनुभवोऽखिलः ॥ ६३ ॥
गोपीचंदनमुद्राभिस्तुलसीमालया गले ।
गुरूपदिष्टाः शुद्धोर्ध्वपुण्ड्रास्तस्याऽतिवल्लभाः ॥ ६४ ॥
यथाऽऽवश्यकवस्त्रादि न धृत्वा नृपमन्दिरम् ।
तदीया नैव यान्त्येवमत्राऽप्येतत्त्रयं विना ॥ ६५ ॥
वैष्णवानां चिह्नमूर्ध्वपुण्ड्रं माला च कण्ठगा ।
लोकानां लक्षणं किंचिद्राजसम्बन्धिनामिव ॥ ६६ ॥
गुरूपदेशमादाय तस्माद्भूत्वा सुवैष्णवाः ।
धृत्वा च स्वामिचिह्नानि सेवन्तां सततं हरिम् ॥६७॥

---

१—मर्यादयेदमुक्तम् ।

पूर्णानन्दमयं यद्ब्रह्म परं सर्वदैव सेवध्वम् ।
बुद्ध्यध्वं स्थिरमनसा तद्वेदादिमनिरन्तराभ्यासात् ॥६८॥

इति श्रीश्रीमद्वल्लभाचर्य्यमतवर्त्तिश्रीव्रजवल्लभचरणानुचरपञ्चनदीघनश्यामभट्टात्मजगोवर्द्धनशीघ्रकविविरचिते वेदान्तचिंतामणौ नास्तिक्योच्छेदकशास्त्रार्थसंग्रहाख्यं प्रथमं प्रकरणम् ॥ १ ॥

## प्रमाणनिरूपणं नाम द्वितीयं प्रकरणम् ।

शाब्दमेव प्रमाणं स्यात्परोक्षब्रह्मनिश्चये ।
अलौकिकं स्वतन्त्रं च साक्षात्तत्प्रतिपादकम् ॥ १ ॥
वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि ।
समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम् ॥ २ ॥
उत्तरं पूर्वसन्देहवारकं परिकीर्त्तितम् ।
अविरुद्धं तु यत्त्वस्य प्रमाणं तच्च नाऽन्यथा ॥ ३ ॥
एतद्विरुद्धं यत्सर्वं न तन्मानं कथञ्चन ।
इत्युक्तमाचार्यपादैः प्रमाणानां विनिर्णये ॥ ४ ॥
स्वस्वरूपं हि बोधार्थं वेदेष्वेव निरूपितम् ।
सर्गादीनां प्रकाराश्च भक्तिर्मुक्तिश्च वर्णिता ॥ ५ ॥
परोक्षाचिन्त्यरूपं यदस्पष्टं साधनं फलम् ।
अतस्तैरेव जानीयुर्मायामोहितबुद्धयः ॥ ६ ॥

---

१—समाधिभाषा—श्रीभागवतम् । २—यत्—यस्मात्कारणात् ब्रह्म परोक्षाचिन्त्यरूपं, साधनं फलं च अस्पष्टं अत इत्याद्यन्वयः । विस्पष्टमित्यादिपाठः पुरातनः । स चाऽर्थबोधे सन्दिग्धइवाऽऽसीदिति मयैवं परिवर्त्तितः । लग्नश्चेत्तथैव रक्ष्यः ।

वेदास्ते स्वात्मकास्तेनोपदिष्टा ब्रह्मणे पुरा ।
तेनर्षिभ्यः स्वशिष्येभ्यस्तैस्तैः स्वेभ्यश्च दर्शिताः ॥ ७ ॥

एवं परम्पराप्राप्ता आम्नाया भगवन्मयाः ।
वेदो[1] नारायणः साक्षात्स्वयंभूरिति शुश्रुम ॥ ८ ॥

यो ब्रह्माणं[2] विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तंऽह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ ९ ॥

कालेन[3] नष्टा प्रलये वाणीयं वेदसंज्ञिता ।
मयाऽऽदौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः १०

श्रुतिभागवतादौ तत्स्पष्टमेवाऽवगम्यते ।
बहुप्रकारैर्बोधार्थं तत्र ब्रह्मैव रूप्यते ॥ ११ ॥

'नारायणपरा वेदा' इति भागवतादिषु ।
'वेदैश्च सर्वैरहमेव वेद्य' इति हि स्मृतिः ॥ १२ ॥

तत्राऽवशिष्टं हरिणा विरक्तायाऽर्जुनाय तत् ।
तथा तदधिकारेण स्मृतिरूपेण रूपितम् ॥ १३ ॥

वेदोऽपि ब्रह्मवाक् साक्षात्तत्र[4] स्यादेव वेदता ।
गीता[5] सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः ।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिर्गता ॥ १४ ॥
सूत्रेषूभय[6]रूपत्वं वाक्य[7]शेषत्वमुच्यते ॥ १५ ॥

---

१—श्री. भा. स्कंध. ६ । २—श्वेताश्वतरे । ३—श्री. भा. स्कंध. ११ । ४—ईश्वरवाचि । ५—पाद्मे, गीतामाहात्म्ये । ६—श्रुतिस्मृति-रूपत्वम् । ७—वेदवाक्यशेषत्वं गीताया इत्यर्थः ।

वेदस्य दुर्ज्ञेयार्थत्वाच्छास्त्रं सन्देहवारकम् ।
व्यासेनाऽविष्कृतं सूत्रमयं ब्रह्मनिरूपकम् ॥ १६ ॥

तच्छिष्यो जैमिनिरपि वेदैर्धर्मं व्यचारयत् ।
एवं कृत्स्नो हि वेदार्थो मीमांसातोऽवसीयते ॥ १७ ॥

व्यासो निर्णीतवान्ब्रह्मस्वरूपं[2] साधनं[3] फलम्[4] ।
श्रुतितः स्मृतितः शास्त्रे न्यषेधत्तदसम्मतम्[5] ॥ १८ ॥

ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ।
प्रामाण्यमिति गीतासु तस्य भागवतेऽपि च ॥ १९ ॥

'जिज्ञासितं सुसंपन्नमपि ते महदद्भुतम्' ।
कृतवान् भारतं यस्त्वं सर्वार्थपरिबृंहितम् ।
'जिज्ञासितमधीतं च यत्तद्ब्रह्म सनातनम्' ॥ २० ॥

अथापि शोचस्यात्मानमकृतार्थ इव प्रभो ।
भारतेऽदर्शि वेदार्थः पुराणैरपि कैश्चन ।
सूत्रकर्त्तुस्तथाऽप्यात्मा नाऽत्यतुष्यद्यदा तदा ॥ २१ ॥

तस्मै नारदवाग्द्वारोपदिष्टाय समाधितः ।
भगवान्दर्शयामास रूपं भागवतात्मकम् ॥ २२ ॥

यथाऽपश्यत्तथैवाऽऽविश्वकाराऽक्षरशोऽखिलम् ।
'श्रीभागवतरूपस्त्वं प्रत्यक्षः कृष्ण एव हि' ॥ २३ ॥

---

१—'अथाऽतो ब्रह्मजिज्ञासे'त्यादि चतुरध्यायम् । २—द्वितीयेऽध्याये । ३—तृतीयेऽध्याये । ४—चतुर्थेऽध्याये । ५—द्वितीयेऽध्याये । ६—श्रुतिस्मृत्यसंमतं निरीश्वरसांख्ययोगादिमतम् । ७—स्कन्धः १ ।

इति पाद्मे स्फुटं ज्ञानावतारो बादरायणः ।
समतुष्यत्तदा कृष्णदर्शलीलादिकीर्त्तनात् ॥ २४ ॥
भगवान्ब्रह्मणे देवर्षये स मुनये च सः ।
प्राकाशयदिदं व्यासः प्रादुश्चक्रे शुकादिभिः ॥ २५ ॥
'कस्मै येने'त्यादि तत्राऽनेकत्रैतत्प्रदृश्यते ।
अन्यत्स्मृतिपुराणाद्यप्यासीत्तादृग्घरीच्छया ॥ २६ ॥
एवमेतानि चत्वारि संशयघ्नानि च क्रमात् ।
प्रकाशितानि हरिणा जीवानुग्रहकारिणा ॥ २७ ॥
अनादित्वाच्च भगवद्रूपत्वात्सर्वनिर्णये ।
सर्वथैव प्रमाणं स्यादेषामक्षरमक्षरम् ॥ २८ ॥
अन्यदेभ्यो बहुतरमविरुद्धं प्रमापकम् ।
विरोधीन्यप्रमाणानि मोहशास्त्राणि सृष्टये ॥ २९ ॥
विरुद्धधर्माचिन्त्यं तत्परोक्षं महदद्भुतम् ।
अलौकिकेन शब्देन ज्ञातुमेतेन शक्यते ॥ ३० ॥

---

१ 'अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥
आदिशब्दादधिकारः साङ्गश्च श्रवणम् ।

२—श्रीभागवतद्वादशस्कन्धे परम्परेयं दर्शिताऽन्यत्र च बहुषु स्थलेष्वित्यर्थः । —३ 'अणोरणीयान्महतो महीयान्' 'एकः सन्बहुधा विजायते' इत्यादि श्रुतिभिः 'सर्वतः पाणिपादं तत्' 'अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपं' इत्यादिस्मृतिभिः 'उभयव्यपदेशात्त्वहिकुण्डलवत्' 'श्रुतेस्तु शब्दमूलत्वात्' इत्यादिसूत्रैश्च सिद्धान्तितम् । ४—ब्रह्म । ५—'वेदाः श्रीकृष्णे'त्यादिपूर्वोक्तेनेत्यर्थः ।

यद्यदिष्टं तु तत्सर्वं यद्वशो मृत्युरप्यसौ ।
अवश्यमेव ज्ञातव्यं तद्दुःखातिनिवृत्तये ॥ ३१ ॥

[1]लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते
मानुष्यमर्थदमनित्यमपीह धीरः ।
तूर्णं यतेत न पतेदनुमृत्यु याव-
न्निःश्रेयसाय विषयः खलु सर्वतः स्यात् ॥३२॥

न जन्मनः प्राक्पितरौ नाऽपत्यं मृत्यनन्तरम् ।
न स्त्री स्वीया विवाहात्प्राक्तस्मात्तन्ममता वृथा ॥३३॥

विक्रीते गृहभूषादौ नष्टे दुःखं न जायते ।
अविक्रीते तु जायेत ममता तत्र कारणम् ॥ ३४ ॥

देवदत्ताभिधे देहे मध्येऽहमिति मन्यते ।
क्षणान्तरे मृतौ देहः क्व वा जीवः क्व गच्छति ॥३५॥

करोत्यघं कुटुम्बार्थं मृते [2]तद्रोदिति क्षणम् ।
न सहायस्तदा दूतैर्यदा नीयेत यातनाम् ॥ ३६ ॥

प्रिया स्त्री तनया गेहं धनाद्यत्रैव तिष्ठति ।
देहोऽपि किन्तु यात्येकः पापपुण्यसहायवान् ॥ ३७ ॥

मुनिभिः सर्वगतिभिः खस्थानां ग्रहणादिकम् ।
यथा तथाऽधोलोकस्य गतयोऽपि विनिश्चिताः ॥३८॥

---

१—स्कन्ध. ११ । २—तस्मिन्नितिद्योतकमव्ययं तत् । तेन कुटुम्बे मृत इत्यन्वयः ।

देहेऽहंता च गेहादौ ममता मायया तु या ।
ते संसारो वृथैतज्जं रागवैरादिकं त्यज ॥ ३९ ॥

सदासम्बधिनं सर्वदुःखघ्नं नित्यमीश्वरम् ।
स्नेहाद्भज महानन्दोऽमृतदेहो भविष्यति ॥ ४० ॥

असेवने महान्दोषः पाद्मे यज्जीवलक्षणे ।
'दासभूतो हरेरेव नान्यस्यैव कदाचन' ॥ ४१ ॥

इत्यसौ सहजो दासो जीवः सृष्टः स्वभक्तये ।
अभजंस्तं तु तद्दत्तं 'यो भुंक्ते स्तेन एव सः' ॥ ४२ ॥

नृदेहमाद्यं[1] सुलभं सुदुर्लभं
प्लवं सुकल्पं गुरुकर्णधारम् ।
मयाऽनुकूलेन नभस्वतेरितं
पुमान्भवाब्धिं न तरेत्स आत्महा ॥ ४३ ॥

अतोऽवश्यं सेवनीयो निरपेक्षोपकारकृत् ।
ज्ञातव्यश्च यथार्था स्याद्भक्तिर्ज्ञानं विना न यत् ॥४४॥

वेदादिनिष्ठा मुनयो बहवो ज्ञानचक्षुषः ।
अपश्यन्भक्तियोगेन सम्प्रापुस्तं पुराविदः ॥ ४५ ॥

यतमानो विदे[2] वेदैः शक्त्या दीनो भजेद्व्रतः ।
माहात्म्यज्ञोऽस्य कृपया सुलभं स्यात्सुदुर्लभम् ॥४६॥

---

१—श्रीभागवते । २—ज्ञानाय ।

सर्वैरनन्यशरणैः प्रवर्ण्यमानं प्रमाणबन्दिगणैः ।
महतः फलान्तरङ्गं भजामि बीजं प्रपञ्चतरोः ॥ ४७ ॥

इति श्रीमद्वल्लभाचार्य्यमतवर्त्तिश्रीव्रजवल्लभचरणानुचरपञ्चनदी-घनश्यामभट्टात्मजश्रीगोवर्द्धनशीघ्रकविविरचिते वेदान्तचिन्तामणौ प्रमाणनिरूपणं नाम द्वितीयं प्रकरणम् ॥ २ ॥

## संक्षिप्तकार्यनिरूपणं नाम तृतीयं प्रकरणम् ।

शुद्धाद्वैतैकरूपाय शुद्धद्वैतप्रदर्शिने ।
शक्त्या[1] सर्गादिलीलाय नमोऽस्त्वद्भुतकर्मणे ॥ १ ॥
स विश्वं लीलयैवेदं सृजत्यवति हन्त्यजः ।
तथा 'यतो वा इमानि भूतानी'ति प्रपठ्यते ॥ २ ॥
तैत्तिरीयेषु 'तस्माद्वा एतस्मादि'ति च स्फुटम् ।
तदस्य ब्रह्मरूपत्वं ब्रह्मकार्यस्य युज्यते ॥ ३ ॥
मृदुद्भूतघटादीनां मृण्मयत्वं निरीक्ष्यते ।
य'त्सर्वं खल्विदं ब्रह्म तज्जलानि'ति हि श्रुतिः ॥ ४ ॥
'सर्वं पुरुष एवेदं भूतं भव्यं भवच्च सत्' ।
इति भागवते सूक्तं पौरुषं समनूदितम् ॥ ५ ॥
यथा घटशरावाद्याकृतिमात्रेण भिद्यते ।
न भिद्यते मृण्मयत्वात्तथैवाऽत्र चराचरम् ॥ ६ ॥

---

१—शक्तिप्रसारसमये प्रपञ्चावस्थायां शुद्धं द्वैतमिव दर्शयतीत्यर्थः ।

मृद्रूपा प्रथमावस्था मध्ये भिद्येत कारणात् ।
घटाद्याकारभेदेन मृत्सा तर्ह्यपि वस्तुतः ॥ ७ ॥
लयेऽपि शकलाः सूक्ष्माः सूक्ष्मा जायन्त एव हि ।
ते मृद्येव प्रलीयन्त इत्यन्तेऽप्यस्य मृत्तिका ॥ ८ ॥
तथा ब्रह्मैवाऽत्र पूर्वमन्ते ब्रह्मैव शिष्यते ।
मध्ये क्रीडार्थभेदार्थं नाना तेनेच्छया कृतम् ॥ ९ ॥
सर्वाकारं सर्वशक्ति सर्वधर्माश्रयो हि तत् ।
सच्चिदानन्दरूपं च तस्मादाविरभूज्जगत् ॥ १० ॥
जडजीवान्तरात्मानः पूर्वमाविष्कृता इमे ।
एकं द्वयं त्रयं तत्र भेदायाऽस्थापयद्विभुः ॥ ११ ॥
जडे सदंशः प्रकटश्चिदानन्दौ तिरोहितौ ।
जीवे च सच्चितावन्तर्यामिण्येतत्त्रयं स्फुटम् ॥ १२ ॥
सन्नाम विद्यते चिच्च चैतन्येन प्रकाशते ।
आनन्दः प्रियताऽतीवेत्येषां प्रत्यक्षलक्षणम् ॥ १३ ॥
जडं सर्वं मृदश्मादि क्रियाशून्यं स्वतो हि यत् ।
सत्तामात्रं जडस्याऽस्ति न प्रीतिर्न प्रकाशनम् ॥ १४ ॥
तनोर्यत्संबंध एव श्वासादिर्न शवेऽन्यथा ।
सोऽणुमात्रश्च हृत्स्थानो जीवो जीवनकारणम् ॥ १५ ॥

---

१—'एकोहं बहु स्याम्' इत्यादि श्रुतिप्रमाणितया । २—तेनाऽत्र परेषामप्रामाणिकविशेषणदानं शक्तिसंकोचो वादुर्वारः । ३—सदाद्यंशम् । ४—स्वभावत इत्यर्थः ।

स विद्यतेऽखिले देहे चैतन्येन प्रकाशते ।
जीवेन विषयानन्दो यद्यप्येषोऽनुभूयते ॥ १६ ॥

न्यूनाधिकः स क्षणिको न पूर्णानन्द उच्यते ॥
'तस्यैवानन्दस्य मात्रामुपजीवन्ति' हि श्रुतिः ॥१७॥

भिन्नः प्रतिशरीरं योऽणुर्हृत्स्थानो हंसशब्दभाक् ॥
साक्षी सोन्तःस्थितः स्पष्टं तत्र तत्रयमेव हि ॥१८॥

भूतैर्नाना तनूः सृष्ट्वा जीवान्तर्यामिणावुभौ ।
प्रत्येकं संस्थाप्य जीवान्मायया्ऽमोहयत्प्रभुः ॥ १९ ॥

जडेष्वपीच्छया धर्मांस्तिरोभाव्याखिलान्निजान् ।
केचित्क्वचित्क्वचित्केचिच्छेषिताऽभेदसिद्धये ॥ २० ॥

प्ररोहो मार्दवं किंचिद्वृक्षे काठिन्यमश्मसु ।
अप्ररोहश्चेति भेदोऽयं मृज्जातेष्वपि गम्यते ॥ २१ ॥

अनुष्णाशीतलस्पर्शो भूवाय्वोरप्सु शीतलः ।
स तेजस्युष्ण एवेति धर्माणामप्यनेकता ॥ २२ ॥

चिदाद्यभावतो रूपे बह्वाकारप्रकारतः ।
परस्परं विभिन्नानां धर्माणामपि दर्शनात् ॥ २३ ॥

सज्ञानानाञ्च जीवाना मायया मोहनाद्दृढम् ।
महान्प्रदृश्यते भेदो ब्रह्मत्वं नैव लक्ष्यते ॥ २४ ॥

युग्मम् ।

वस्तुतस्त्वखिलं ब्रह्म त्रिकालेषु तथा स्मृतिः ।
'वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ २५ ॥

 

त्वय्यग्र आसीत्त्वयि मध्य आसी-
त्त्वय्यन्त आसीदिदमात्मतन्त्रे ।
त्वमादिरन्तो जगतोऽस्य मध्यं
घटस्य मृत्स्नेव परः परस्मात् ॥ २६ ॥

'भूतानि विष्णुर्भुवनानि विष्णुः' ।
इति भागवते विष्णुपुराणेऽन्यत्र चोदितम् ।
तस्मादभिन्नमेवास्ति कारणाद्ब्रह्मणो जगत् ॥ २७ ॥
आविर्भावे चिदादीनां धर्माणामपि सर्वशः ।
ब्रह्मैवैकं तदा पूर्णं सर्वं स्यादेव केवलम् ॥ २८ ॥
दृश्येताकारतो भेदो मुद्रिकाकटकादिषु ।
आदिमध्यावसानेषु स्वर्णमेवेति निश्चयः ॥ २९ ॥
जीवानां ब्रह्मविज्ञानादानन्दांशप्रकाशनात् ।
सर्वत्र लीलया तादृक् ब्रह्मैवैकं प्रतीयते ॥ ३० ॥
नानात्वमैच्छिकं मध्येऽचिन्त्यत्वाद्दृश्यते महत् ।
तमोनाशे शुद्धदृष्टे 'नेह नानास्ति किञ्चन' ॥ ३१ ॥
ब्रह्मरूपः सदा सत्यः प्रपञ्चस्तत्कृतोऽखिलः ।
निरूप्यते हि वेदादौ शुद्धाद्वैतमतो मतम् ॥ ३२ ॥
सत्यस्वरूपमेतत्स्वस्मादाविष्कृतं स्वयं येन ।
कर्त्तारं भर्त्तारं हर्त्तारं भज सदा ललितलीलम् ॥ ३३ ॥

इति श्रीमद्वल्लभाचार्यमतवर्तिश्रीव्रजवल्लभचरणानुचरपंचनदी घन-
श्यामभट्टात्मजश्रीगोवर्द्धनशीघ्रकविविरचिते वेदान्तचिन्तामणौ
संक्षेपतस्त्रिविधकार्यनिरूपणं नाम तृतीयं प्रकरणम् ॥ ३ ॥

---

१—( स्कन्ध. ८ )

## प्रपञ्चसत्यत्वनिरूपणं नाम चतुर्थं प्रकरणम् ।

भगवत्समवायित्वात्ताद्रूप्यात्सत्य एव हि ।
प्रपञ्चो, यादृशं स्वर्णं तादृक् स्यादेव कुण्डलम् ॥ १ ॥
तन्तुकार्यं पटस्तन्त्वात्मकः स्युस्तन्तवो यथा ।
सूक्ष्माः सिताश्च वस्त्रेऽपि तत्तादृक्षत्वमीक्ष्यते ॥ २ ॥
'ऐतदात्म्यमिदं सर्वं' 'तत्सत्य'मिति पठ्यते ।
'यदिदं किञ्च तत्सत्य'मित्याचक्षत इत्यपि ॥ ३ ॥
सर्वशब्देन निर्दिश्य दृष्टश्रुतमदोऽखिलम् ।
एतस्य ब्रह्मरूपत्वं सत्यत्वं च निरूप्यते ॥ ४ ॥
कालत्रयेऽप्यबाध्यं यत्सत्यमित्युच्यते बुधैः ।
'त्वय्यग्र आसी'त्पद्येऽपि सदा सत्ताऽभिधीयते ॥ ५ ॥
तस्मात्सनातनमिदमखण्डं वर्त्तते सदा ।
मध्ये[1] कार्यात्मना पूर्वोत्तरयोः कारणात्मना ॥ ६ ॥
'विश्वं हि ब्रह्म तन्मात्रं संस्थितं विष्णुमायया ।
यथेदानीं तथा चाग्रे पश्चादप्येतदीदृशम्' ॥ ७ ॥
उक्तं तृतीयस्कन्धेऽथ सूत्रकर्त्रा श्रुतेर्बलात् ।
कारणानन्यतामस्योक्त्वा सत्यत्वं प्रपञ्चितम् ॥ ८ ॥
१४-तदनन्यत्वमारम्भणशब्दादिभ्यः[2] ॥
भावे चोपलब्धेः ॥ १५-सत्वाच्चावरस्य ॥१६-
असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्॥१७-

---

१-वर्तत इति शेषः । २-(अ. २. पा. १. सू. )।

युक्तेः शब्दान्तराच्च ॥ १८–पटवच्च ॥१९–

[1]ब्रह्मानन्योऽस्ति सत्योऽयं भावे सत्युपलभ्यते ।
अवरस्य प्रपञ्चस्य सत्वमुक्तश्रुतौ श्रुतम् ॥ ९ ॥
'असद्वा इद'मित्येतदव्याकृतिपरं मतम् ।
'तदात्मानं स्वय'मिति वाक्यशेषस्य संगतेः ॥ १० ॥
समवेतं भवेत्कार्यं युक्तिर्बीजद्रुमादिवत् ।
वाक्यान्तराणि सत्यत्वबोधकानि बहूनि हि ॥ ११ ॥
पटोऽनुभूयते सर्वो विस्तीर्णो नानुभूयते ।
संकोचेऽल्पतया तद्वत्सृष्टिप्रलययोर्जगत् ॥ १२ ॥
व्याख्यातमित्थं भाष्ये सत्कार्यवादो विविच्यते ।
एवं सर्वत्र वेदादौ युक्तिभिश्चानुभूयते ॥ १३ ॥
आविर्भावतिरोभावाभ्यां नैवास्ति ह्यनित्यता ।
आविर्भावे प्रतीयेत तिरोभावे तु नेच्छया ॥ १४ ॥
आ[2]विष्कृतानि भूतेभ्यः शरीराणीच्छया स्वयम् ।
ईश्वरो जीवयुक्तानि निमित्तीकृत्य केवलम् ॥ १५ ॥
भूतेभ्य आविष्कुरुते तादृशानीतराण्यपि ।
तानि कर्मानुसारेण जीवान् प्रापयति प्रभुः ॥ १६ ॥

युग्मम् ।

---

१–इत आरभ्य द्वादशश्लोकपर्यन्तमुक्तसूत्राणामर्थः । २–स्वयं भगवता इच्छया भूतेभ्यः शरीराणि आविष्कृतानि इत्येकोऽन्वयः । किंच—प्रभुरीश्वरो जीवयुक्तानि तानीति शेषः केवलं निमित्तीकृत्य भूतेभ्यः ( मातृपितृवीर्यरजोभूतेभ्यः ) तादृशानि इतराण्यपि आविष्कुरुते इत्यपरः । तानि च कर्मानुसारेण जीवान् प्रापयति ।

देहाः सन्त्येव भूतेषु भागैः कारणरूपतः ।
मध्ये कार्यात्मना भिन्ना लीयन्तेऽन्ते च कारणे ॥१७॥
जीवस्तु नित्य एवास्ति योगो भगवदिच्छया ।
आविर्भावतिरोभावशालि नित्यमतोऽखिलम् ॥ १८ ॥
व्यासेन भारते योधा ये हतास्ते प्रदर्शिताः ।
इति नित्यं तिरोभावेऽपीच्छया दृश्यते क्वचित् ॥१९॥
केचिदाहुर्जगन्मिथ्या भ्रमाद्ब्रह्मणि दृश्यते ।
यथेह रजतं शुक्तौ यथा रज्जौ भुजङ्गमः ॥ २० ॥
ब्रह्मादृश्यं सर्वथैव निराकारं मते च ते ।
साकारे दृश्य एव स्यादाश्रये निश्चितं भ्रमः ॥ २१ ॥
न धूल्याच्छन्नशुक्तौ वा वायौ वा भ्रान्तिरिष्यते ।
किञ्च साधर्म्यमूलोऽयं शुक्तौ यच्चाकचक्यतः ॥ २२ ॥
किं नान्यथा गजभ्रान्तिर्मायिकं सगुणं जगत् ।
निर्धर्मकं विमायं तत् साम्यगन्धोऽपि नानयोः ॥ २३ ॥
हट्टादौ रजतं सत्यं वल्मीकादौ च पन्नगः ।
दृश्यते तज्जसंस्कारात् कल्पयेद्धीर्मृषाश्रये ॥ २४ ॥
तथा भिन्नमतः सत्यं दृष्टं चेदीदृशं क्वचित् ।
तदा कल्प्येत संस्कारा दृश्यते श्रूयते न तत् ॥ २५ ॥
नन्वसत्यो यथा स्वप्नो गृहवित्तादि लभ्यते ।
मिथ्या तत्र न निद्रान्ते तदसत्यमिदं तथा ॥ २६ ॥

---

१—पूर्वपक्षः । २—उत्तरपक्षः । ३—स्वप्ने । ४—स्वाप्निकं वस्तु ।

इति चेन्न तदोद्भूतेः पापैः पुण्यैर्न वै भवेत् ।
दुःखं सुखं वा तत्सर्वं जगज्जाभ्यां तु जायते ॥ २७ ॥
दृष्टं जाग्रदवस्थायां यद्यद्धटपटादिकम् ।
संस्कारात् कल्प्यते तत्तन्मोहनान्मायया मतेः ॥ २८ ॥
अस्य जाग्रदवस्था तु मोक्षस्तत्र न किंचन ।
क्वत्यं सत्यं तदा दृष्ट्वाऽत्रासत्यं परिकल्पितम् ॥ २९ ॥
नन्वदृष्टमपि स्वप्ने दृश्यते श्रृङ्गवाञ्छशः ।
चलन्वृक्षो गजः पीत इत्याद्यत्राखिलं तथा ॥ ३० ॥
इति चेन्न शशो वृक्षो हस्ती श्रृङ्गगतिक्रिया ।
पीतवर्ण इमे दृष्टा योगमात्रं तु कल्प्यते ॥ ३१ ॥
गृहं सत्यं स्वयं सत्यो योगो ममतया मुधा ।
जीवः सत्यस्तनुः सत्याऽहंता [1]राजत्ववद्वृथा ॥ ३२ ॥
सिद्धान्त इति चेत्तर्हि दृष्टान्त उपपद्यते ।
पुराणेष्वप्येतदर्थं स्वप्नाभत्वं क्वचित्कृतम् ॥ ३३ ॥
अतः सूत्रेषु 'वैधर्म्याच्च न स्वप्नादिवत्' [2]वतः ।
निषिध्यतेऽधिकरणादसत्यत्वं तु वस्तुतः ॥ ३४ ॥
स्वप्ने भुक्त्यम्बुपानाभ्यां क्षुत्तृण्नैव निवर्त्तते ।
तदा देहकृतैर्बन्धात्कथं मुच्येत साधनैः ॥ ३५ ॥
तस्मादसत्यं नैवेदं ताद्रूप्यान्नित्यमेव हि ।
श्रुतिष्वनेकत्र सत्यत्वमुक्तं नान्यथा क्वचित् ॥ ३६ ॥

---

१—स्वप्ने विप्रस्य राजाहमिति बुद्धिर्यथा व्यर्था तथा । २—अतः—अस्मादधिकरणादित्यन्वयः ।

एतत्केचिदविद्वांसो मायासंसृतिमात्मनः[1] ।
अनाद्यावर्त्तितं नृणां कादाचित्कं प्रचक्षते ॥ ३७ ॥
'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' ।
इत्यासुरेषु गणिता असत्यत्वप्रवादिनः ॥ ३८ ॥
दृढाहंतापदं देहो गेहादि ममतास्पदम् ।
यदा सत्यं विजानीयान्न विरज्येत कश्चन ॥ ३९ ॥
वैराग्यार्थमसत्यत्वं[2] पुराणेषु क्वचित्क्वचित् ।
अभिप्रेत्य[3] तिरोभावं कुत्रचित्संसृतिं तथा ॥ ४० ॥
क्रीडामये प्रभोरस्मिन् संयोगविगमास्पदे ।
तिरोभाविनि नो रागः कर्त्तव्यः क्षणिके वृथा ॥ ४१ ॥
शेषेणाऽप्यस्य नित्यत्वं निश्चितं पस्पशाह्निके ।
'नित्यः कार्योऽथवा शब्द' इत्याकारविचारणे ॥४२॥
'नित्ये शब्दार्थसंबंध' इत्येतत्तु विवृण्वता ।
शब्दश्चार्थश्च संबंधस्त्रयो नित्या निरूपिताः ॥ ४३ ॥

---

१ ( स्कंध. १२. ) २—अत इति शेषः । ३—मुख्यावान्तरभेदादनेकप्रकारा सृष्टिः । सर्वप्रकाराऽपि सा प्रपञ्चशब्देनोच्यते शास्त्रे । तास्वेव मायिकी संसारादिरूपाऽपि सृष्टिः । ततश्च वैराग्यार्थं क्वचित्संसारमेव हृदिकृत्य प्रपञ्चोऽसत्य इत्युच्यते न तेन कार्यरूपः प्रपञ्चस्तथा ज्ञेयः । क्वचिच्च कार्यमध्यपतितानामपि पदार्थानां तिरोभावं ( विद्यमानस्य वस्तुनोऽननुभवविषयत्वं ) दृष्ट्वा तमेव हृदिकृत्वा 'प्रपञ्चोऽसत्य' इत्युच्यते ।

एवं सर्वत्र शास्त्रेषु नित्यमेव निरूपितम् ।
आविर्भावतिरोभावाभ्यां मिथ्या भात्यनित्यता ॥ ४४ ॥
असच्छास्त्रेष्वनित्यत्वं न्यायादिषु विविच्यते ।
सनास्तिक्येषु मोहाय मुनिभिर्निर्मितेष्विह ॥ ४५ ॥
उत्तरोत्तरसर्गार्थं मोहनाय मनीषिणाम् ।
रुद्रादिदैवतैः कैश्चिन्मतेषु रचितेषु च ॥ ४६ ॥
तादृक्छास्त्राभ्यसनतो भ्रान्तचित्ताः स्वकर्मभिः ।
आप्राप्ततत्वा जायन्ते म्रियन्ते च मुहुर्मुहुः ॥ ४७ ॥
'[१]ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति' ॥ ४८ ॥
केचिदेव तु वेदार्थं प्रसादात्सद्गुरोर्हरेः ।
विनिश्चित्य भजन्तस्तं मुच्यन्ते प्राप्नुवन्त्यपि ॥ ४९ ॥
नित्यं स्वरूपमखिलमाविर्भाव्य स्वयं तिरोभाव्य ।
रममाणमविहतेच्छं हृत्पदके हीरकं विरचयाच्छं ॥५०॥

---

इति श्रीमद्वल्लभाचर्य्यमतवर्त्तिश्रीव्रजवल्लभचरणानुचरपञ्चनदी-
घनश्यामभट्टात्मजगोवर्द्धनशीघ्रकविविरचिते वेदान्तचिंतामणौ
प्रपञ्चसत्यत्वनिरूपणं नाम तुर्य्यं प्रकरणम् ॥ ४ ॥

---

१–( मार्कंडेये. अ. ८१ )

## आविर्भावतिरोभावनिरूपणं नाम पञ्चमं प्रकरणम् ।

ननूत्पत्तिर्घटस्यास्ति ध्वंसोऽप्यस्य विलोक्यते ।
कथं वाच्या प्रपञ्चान्तःपातिनस्तस्य नित्यता ॥ १ ॥

[१]अनन्तं सत्यनादित्वे नित्यमित्युच्यते, कथम् ।
नश्वरं नित्यमिति चे[२]द्यथैतत्कथ्यते तथा ॥ २ ॥

घटे नष्टे तु किं नष्टं नाकारोऽ[३]न्यत्र दृश्यते ।
न मृत्तिका प्रस्थमिता चैतावत्येव लभ्यते ॥ ३ ॥

न नष्टा घटसंज्ञाऽपि शब्दानां नित्यता यतः ।
सृष्ट्यारम्भादनेके स्युर्ध्वस्तास्ते सा तु विद्यते ॥ ४ ॥

किन्त्वाकारमृदोर्योऽभूत्संज्ञाया वाचकत्वतः ।
तत्राकारतिरोधाने संयोगः स न वर्त्तते ॥ ५ ॥

सर्वाकारो हरिः पूर्ण एकैकाकारतः पृथक् ।
बहुत्वमिच्छन् रूपाणि चकार द्विवि[४]धान्यपि ॥ ६ ॥

सर्ववर्णानुपूर्वीकैः शब्दैर्वाच्योऽर्थतः स्वयम् ।
व्यवहाराय नामान्यप्येकैकस्येच्छया व्यधात् ॥ ७ ॥

---

'सर्वाणि रूपाणि विचित्य धीरः
नामानि कृत्वाऽभिवदन् यदास्ते' ।
'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' ॥

---

१–पूर्वः पक्षः । २–उत्तरः पक्षः । ३–घटान्तरेषु । ४–चराचराणि ।

'नामरूपेव्याकरवाणी'त्याद्याः श्रुतयोऽवदन् ।
तच्चित्तौ बृहदारण्ये छान्दोग्येऽन्यत्र च क्रमात् ॥ ८ ॥
कम्बुग्रीवादिमांस्तेष्वाकारो यो नियतः पुरा ।
योगस्तावन्मृदस्तस्य चोत्पत्तिरिति कथ्यते ॥ ९ ॥
अयमर्थः पदादस्माद्बोध्य इत्थं स्वनामसु ।
स्वीयेष्वेकैकरूपेषु संकेतो यः पुरा कृतः ॥ १० ॥
तस्मात्परंपराप्राप्तां[1]त्तथा व्यवहृतेस्तयोः ।
योगं घटेत्यानुपूर्वी वक्ति वाच्यतया तदा ॥ ११ ॥
व्यवहारा भवन्त्यस्मात्ते जलानयनादयः ।
य आकारानुसाराद्वा सृष्ट्वा नियमिताः पुरा ॥ १२ ॥
अनन्तरं [2]तथेच्छातो निमित्तीकृत्य किञ्चन[3] ।
तिरोभाव्यत आकारः क्रियते मृल्लयो मृदि ॥ १३ ॥
घटशब्द[4]स्य वाच्यस्त्वदृश्यो योगो वियोगतः ।
तत्राप्रवृत्तेः संज्ञाया नष्टो घट इतीरणा ॥ १४ ॥
पृथूदरत्वाद्याकारः समग्रस्तु तिरोहितः ।
भिन्नभिन्ना य आकारा दृश्यन्तेऽवयवेषु ते ॥ १५ ॥

---

१—प्राप्तास्तथेति पुरातनः पाठः । २—अदृष्टो भवत्विति मूलेच्छातः । ३—पतनदण्डाघातादि । ४—घटशब्दस्य वाच्यो योगस्तु (आकारमृदो योग एव घटवाच्य इति) वियोगतः अदृश्यो (भवति)। ( अतएव ) तत्र संज्ञाया अप्रवृत्तेः घटो नष्ट इति ईरणा (भवति) । सर्वत्र 'दृश्य' इत्येव पाठः । तदा तु घटशब्दस्य वाच्यस्तु दृश्यः योगः वियोगतस्तत्र संज्ञाया अप्रवृत्तेर्घटः नष्ट इति ईरणेत्यन्वयः ।

पूर्वाकाराशभूता हि घटस्य शकला इव ।
तेषामपि तिरोधानं यदाणुत्वं भवेत्तदा ॥ १६ ॥

वस्तुनो विद्यमानस्य जीवानुभवयोग्यता ।
आविर्भावस्तिरोभावोऽतोऽन्यथेति हि लक्षणम् ॥१७॥

आविर्भावतिरोभावावुत्पत्तिर्नाश इत्यपि ।
शास्त्रविद्भिर्विकल्प्येते विदुर्ब्रह्मविदस्तु तौ ॥ १८ ॥

'तदेतदक्षयं नित्यं जगन्मुनिवराऽखिलम् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत्' ॥ १९ ॥

इति विष्णुपुराणेऽपि प्रथमांशे निरूपितम् ।
उक्तं भागवतेऽप्येतद्दशमे हरिणा स्वयम् ॥ २० ॥

'खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम् ।
आविस्तिरोऽल्पो भूर्येको नानात्वं यात्यसावपि'॥२१॥

'तस्यैवं विजानतएवं मन्वानस्ये'त्युपक्रम्य,
आविर्भावतिरोभावावात्मनोऽन्नमात्मन इति श्रूयते ॥२२

स्पष्टं श्रुत्यन्तरे केनबृहदारण्यकादिमे ।
मार्कण्डेयपुराणेऽपि तुर्येऽध्याये निरूप्यते ॥ २३ ॥

आविर्भावतिरोभावदृष्टादृष्टविलक्षणम् ।
वदन्ति यत्सृष्टमिदं तथैवान्ते च संहृतम् ॥ २४ ॥

---

१—विद्यमानस्य वस्तुनो जीवाऽननुभवयोग्यताऽतिरोभाव इति भावः । २—( अध्याय. २२. श्लो. ५९ ) ३— छान्दोग्ये । ४—( श्लो. ३९ )

पुराणे[1] ब्रह्मवैवर्त्ते खण्डे श्रीकृष्णजन्मनः ।
एकविंशे तथाध्याये नन्दादीन् कृष्ण आह तत् ॥२५॥
'स्थाने स्थाने पृथिव्यां च काले काले यथोचितम् ।
ईशेच्छयाऽविर्भूतं हि न भवेत्प्रतिबन्धकम् ॥ २६ ॥
ब्रह्माण्डं वा कतिविधमाविर्भूतं तिरोहितम् ।
विधेया वा कतिविधास्तस्य भ्रूभंगलीलया' ॥ २७ ॥
देहोऽपि पंचभूतेभ्य[2] आविर्भूतस्तदिच्छया ।
योगोऽत्र योग्यभागानां तेषां तत्तादृगाकृतेः[3] ॥ २८ ॥
कर्मानुसारतो जीवस्तावत्कालं भुनक्ति तम् ।
व्यवहारास्तदा तस्मिन् स्युर्मनुष्यगत्वादयः ॥ २९ ॥
परतन्त्रः स तांस्त्यक्त्वा यदा देहान्तरं व्रजेत् ।
वियुज्यन्ते दह्यमाने देहे तान्[4]याकृतिस्तथा ॥ ३० ॥
आकारस्तु तिरोधत्ते तेजो लीयेत तेजसि ।
श्वासादिरूपो यो वायुः सोऽवशिष्टस्तु [5]तं विशेत् ॥३१॥
आकारबद्ध आकाशस्तत्तिरोधानतो गतः[6] ।
जलं तेजसि भूमौ वा भूमिर्भस्मादिरूपतः ॥ ३२ ॥
वियुक्तान्यपि विद्यन्ते संज्ञाया अप्रवृत्तितः ।
संयोग[7]स्याभिधेयत्वान्नष्टोऽसाविति गद्यते ॥ ३३ ॥

---

१–( श्लो. ९ ) । तथा ( श्लो. १२१ ) २–पंचभूतानाम् । ३–सा च तादृगाकृतिश्चेति । ४–भूतानि । ५–महान्तं वायुम् । ६–महाकाशे इति शेषः । ७–संयोगस्य 'घट' इत्यभिधेयत्वात् संज्ञाया अप्रवृत्तेरित्यन्वयः ।

मुक्ताभिर्ग्रथ्यते मध्ये निधाय पदकान्यपि।
गुणैस्तेषां[1] स संयोगो हार इत्यभिधीयते॥ ३४॥
मुक्तादीनां वियोगे, न हारसंज्ञा प्रवर्त्तते।
संयोगविगमावेव तौ[2] नैकस्यापि हि क्षयः॥ ३५॥
'यथाक्रीडोपस्कराणां संयोगविगमाविह।
इच्छया क्रीडितुः स्यातां तथैवेशेच्छया नृणाम्'॥३६॥
इत्युक्तं प्रथमे स्कन्धे 'तृतीयेऽपि विवेचितम्।
'तन्निरोधोऽस्य शयनमाविर्भावस्तु संभवः' ॥ ३७॥
कार्यं कारणरूपेण तिरोभावे तु विद्यते।
आविर्भावे तु तद्रूपं तदिच्छातो विभिद्यते॥ ३८॥
स एव प्रोयते हारः पुनः प्रोतुं यदीष्यते।
आविष्कुर्यात्तमेवैवं देहमिच्छेद्यदीश्वरः॥ ३९॥
मुद्रिकानिष्ठमाणिक्यं कुण्डले जटितं तथा।
परवानीशितुर्जीवस्तनुं याति तथेतराम्॥ ४०॥
'वासांसि[3] जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही'॥ ४१॥
मुद्रिकायामिन्द्रमणिस्तस्यां जड्यत इच्छया।
परकायप्रवेशादौ जीवस्यावस्थितिस्तथा॥ ४२॥

---

१—मुक्तापदकादीनाम्। २—व्यवह्रियमाणौ उत्पत्तिनाशावित्यर्थः। ३—श्रीगीतोपनिषत्।

तस्या तदेव माणिक्यं शक्यते जटितुं पुनः ।
तथाऽविर्भाव्य तानेव क्वचिद्दर्शयति प्रभुः ॥ ४३ ॥
भारते दर्शिताः सर्वे प्रादुर्भाव्य त एव हि ।
व्यासद्वारा तु तत्स्पष्टं पर्वण्याश्रमवासिके ॥ ४४ ॥
'सर्वे भवन्तो गच्छन्तु नदीं भागीरथीं प्रति ।
ततो द्रक्ष्यथ सर्वांस्तान् ये हताः स्म रणाजिरे' ॥४५॥
ततः सर्वे सदारास्तत्र गत्वाऽवगाह्य रात्रौ व्यासाश्रमं जग्मुः।
'ततो व्यासो महातेजाः पुण्यं भागीरथीजलम् ।
अवगाह्याऽऽजुहावाऽथ सर्वांल्लोकान्महामुनिः॥४६॥
पाण्डवानाञ्च ये योधाः कौरवाणाञ्च सर्वशः ।
राजानश्च महाभागा नानादेशनिवासिनः ॥ ४७ ॥
ततः सुतुमुलः शब्दो जलान्ते जनमेजय ।
प्रादुरासीद्यथा पूर्वं कुरुपाण्डवसेनयोः ॥ ४८ ॥
ततस्ते पाण्डवाः सर्वे भीष्मद्रोणपुरोगमाः ।
ससैन्याः सलिलात्तस्मात्समुत्तस्थुः सहस्रशः' ॥४९॥
इत्यादिना प्रत्येकं नाम्ना निरूप्योवाच
'एकां रात्रिं विहृत्यैवं ते वीरास्ताश्च योषितः ।
आमन्त्र्याऽन्योन्यमाश्लिष्य ततो जग्मुर्यथागतम्' ५०
एतदाकर्ण्य जनमेजयोऽन्वयुङ्क्त
'कथञ्च त्यक्तदेहानां पुनस्तद्दर्शन'मिति ।
तदानीं वैशम्पायन उवाच
'अविप्रणाशः सर्वेषां कर्मणामिति निश्चयः ॥ ५१ ॥

कर्मजानि शरीराणि तथैवाकृतयो नृप ।
महाभूतानि नित्यानि भूताधिपतिसंश्रयात्' ॥ ५२ ॥
इत्यादि । एतदग्रे–
'अविनाशी तथा नित्यः क्षेत्रज्ञ इति निश्चयः ।
भूतानामात्मभावो यो ध्रुवोऽसौ सम्प्रजानताम्' ५३
इत्यादि भारते प्रोक्तमन्यत्रापि स्फुटन्त्विदम् ।
संग्रहीतमिदं विद्वन्मण्डने प्रभुभिः स्वयम् ॥ ५४ ॥
संयोगविगमौ तस्माद्देहादेर्भाष्यकृत्ततः ।
व्यधात्क्वचिच्च सदसत्प्रपञ्चे गणनामपि ॥ ५५ ॥
क्रीडार्थमाविर्भवति नानारूपैर्निजेच्छया ।
सर्वधर्मांस्तिरोधत्ते शक्तिमान् भगवान् स्वयम् ॥ ५६ ॥
'आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः' ।
इत्याचार्यैः संगृहीताद्वचनाच्छक्तिता तयोः ॥ ५७ ॥
'परास्य शक्तिर्विविधैव श्रूयत' इति श्रुतिः ।
'यः सर्वज्ञः सर्वशक्ति'रिति सर्वास्विमास्वपि ॥ ५८ ॥
आविर्भावयतीत्येका तिरोभावयतीतरा ।
[1]तत्कार्यमाविर्भवनं तिरोभवनमप्यथ ॥ ५९ ॥
[2]यद्रूपकर्मकमयमाविर्भवनमिच्छति ।
तयाविर्भावयति तत्तिरोभावेऽप्ययं क्रमः ॥ ६० ॥

---

१—तयोः आविर्भावतिरोभावयोः कार्यम् । २—ननु तयोर्नित्यत्वात्सर्वदा सत्वात्सर्वेषां पदार्थानां सर्वदा प्रत्यक्षमप्रत्यक्षं वा कुतो नेतीति तर्कयन् परिहरति ।

नित्ये ते भगवच्छक्ती न कार्यं युगपत्तयोः ।
सर्वात्मा शक्तिमान्किन्तु यद्यत्कर्मकमिच्छति ॥ ६१ ॥

गमनादानशक्ती तु वर्त्तेते चरणे करे ।
देहीच्छया तयोः कार्यं तदभावे प्रसुप्तता ॥ ६२ ॥

ब्रह्मनिष्ठमिदं सर्वं तस्याविर्भवतीच्छया ।
जात उत्पन्न इत्याद्या तस्मिन्व्यवहृतिस्तदा ॥ ६३ ॥

[1]आविर्भावो हि जननं प्रादुर्भावे जनिर्यतः ।
उत्पूर्वो वा पद गतौ धातुरुत्पत्तिरुद्गमः ॥ ६४ ॥

न दृश्यते तिरोभूतं वस्तु ब्रह्मणि तन्मयम् ।
यथा जवनिकाच्छन्नं पटादि न विलक्ष्यते ॥ ६५ ॥

नाशमाप्तो नाशमाप्त इति व्यवहृतिस्तदा ।
वस्तुतोऽदर्शनं नाशो नशधातुरदर्शने ॥ ६६ ॥

चेतने व्यवहारस्तु मृत इत्यपि जायते ।
प्राणत्यागे हि मृङ् प्राणः संघातस्थो वियुज्यते ॥६७॥

जीवोपाधिः स संघातो जीवेन सह गच्छति ।
जीवदेहवियोगोऽतो मृतिरित्यभिधीयते ॥ ६८ ॥

तौ धात्वर्थविचारे तु व्यवहारेऽपि सिद्ध्यतः ।
नाशोत्पत्तिविकल्पस्त्वपरिनिष्ठधियामयम् ॥ ६९ ॥

---

१—शब्दशास्त्रेणाऽपि जन्मोत्पत्तिनाशमृतिशब्दाः संयोगविगमवाचका एव सिद्ध्यन्तीति वैनाशिकार्धवैनाशिकान्कटाक्षयन्नाह ।

नाशोत्पत्तिविदां शोकोऽप्यनित्यत्वधिया भवेत् ।
नित्यत्वज्ञा ब्रह्मनिष्ठा न विमुह्यन्ति कर्हिचित् ॥७०॥
नित्यत्वं बोधितं स्पष्टं गीतासु हरिणा स्वयम् ।
अज्ञानस्य विनाशाय ततो नष्टाऽर्जुनस्य शुक् ॥ ७१ ॥
'न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम्' ॥ ७२ ॥
दृश्यमानप्रपञ्चस्य मिथ्यात्वं सुप्रमाणतः ।
महतैव प्रपञ्चेन भाष्यकारो निरस्तवान् ॥ ७३ ॥
विस्तृतं रूपमनयोराचार्यचरणादिभिः ।
बालबोधोपयोग्येव संक्षेपेणेह वर्णितम् ॥ ७४ ॥
तस्मात्क्रीडास्पदं विश्वं नित्यं भगवदात्मकम् ।
आविर्भावतिरोभावशालि वेदादिषूदितम् ॥ ७५ ॥
तद्ध्यानमानसः स्या एकोप्यविकारएव यो भवति ।
रमणेच्छया बहुविधः कुर्वंश्चर्यां महाश्चर्याम् ॥ ७६ ॥

इति श्रीमद्वल्लभाचार्य्यमतवर्त्तिश्रीव्रजवल्लभचरणानुचरपञ्च-
नदीघनश्यामभट्टात्मजगोवर्द्धनशीघ्रकविविरचिते
वेदान्तचिन्तामणावाविर्भावतिरोभावकथनं
नाम पंचमं प्रकरणम् ॥ ५ ॥

अविकृतपरिणामनिरूपणं नाम षष्ठं प्रकरणम् ।

य आविर्भावयत्यत्ति बाह्यान्तररतीच्छया ।
समवाय्यप्यविकृतस्तस्मै भगवते नमः ॥ १ ॥
सर्वत्र वादत्रितयं तदत्र सविस्तरं शास्त्रगणैरवर्णि ।
आरंभवादोऽथ विवर्त्तवादस्तथा तृतीयःपरिणामवादः२

---

१—तेनाऽस्मिन्प्रकरणे प्राधान्येनाऽविकृतपरिणामवादः प्रतिपाद्य इति द्योत्यते । अर्थात्—ब्रह्म जगतः समवायिकारणमपि अविकृतमिति वादः—शास्त्रार्थः । न च यद्यत्कारणं तत्तद्विशेषतश्च समवायिकारणं विकृतमेव दृष्टं यथा मृदिति कथं पुनर्ब्रह्म समवायि न विकृतं चेत्युच्यत इति शंक्यम् । युक्त्या तथासिद्धेः । वेदेनैव तथासिद्धेश्च । तथाहि—स्वरूपान्तरापत्तिर्हि विकारः सा च मृदो न दृष्टा । सुवर्णस्य वा । सिद्धेऽपि घटे कृष्णवर्णगुरुत्वगंधादिमती सा तावत्येव लभ्यत इति । संस्थानविशेषस्तु तस्या धर्मः स च तद्रूप एव । पृथगस्थितेः । सुवर्णं च समवाय्यप्यविकृतमेव । अन्यथा शुद्धसुवर्णग्राही शुद्धसुवर्णमुद्रां तन्मुद्रिकां वा न गृह्णीयात् । 'तुष्यतुन्यायेन' लभ्येत वा कचिल्लोके समवायि विकृतम् । न तद्दृष्टान्तेन ब्रह्मणि विकार आपादयितुं शक्यः। **'अपहतपाप्मत्वा'**दिश्रुतिभिस्तस्य तथात्वेऽपि विकाररहितत्वप्रतिपादनात् । लोकविलक्षणत्वाच्च । न च लोकविरुद्धं वेदोपि कथं प्रतिपादयेदित्याशंक्यम् । ब्रह्मणो व्यापकत्वमिवाविकृतमपि लोकविरुद्धं समानमिति गृहाण । ननु व्यापकत्वमाकाशादौ दृष्टमिति न विरुद्धम् । तर्हि लोके सुवर्णादीनां समवायित्वेप्यविकृतत्वमपि दृष्टचरमिति चिरं जीव । २—विवर्तो भ्रमः । विरुद्धं वर्तनं तदभाववति तत्प्रकारकं ज्ञानमिति यावत् ।

तत्र[1] नित्यं विभु नभो वाय्वादीनां विविच्यते ।
चतुर्णां यत्र[2] परमाणुरूपाणां तु नित्यता ॥ ३ ॥
कार्यरूपाण्यनित्यानि तेषामारम्भतोऽभवन् ।
ईश्वरस्तु निमित्तं वा ब्रह्मभिन्नमिदं जगत् ॥ ४ ॥
न तदंशो विभुर्जीवः कालो द्रव्यान्तरं च सः ।
इत्यादिरूप आरम्भवादस्तार्किकसंमतः[3] ॥ ५ ॥
तदद्वैतश्रुतिशतैः खण्डितं मोहनात्मकम् ।
आचार्यैः प्राक्तनैरत्र न विस्तरभियोच्यते ॥ ६ ॥
असत्यं कल्पितं विश्वं भ्रान्त्या रज्जुभुजङ्गवत् ।
स शांकराणां विवर्त्तवादः प्रागिह दूषितः ॥ ७ ॥
प्राचीनाचार्यचरणैर्[4]वह्निवाग्वार्धिवर्द्धिते ।
खण्डितो बहुधा शुद्धाद्वैतचन्द्रोदये मया ॥ ८ ॥
सर्वं कार्यात्मना यत्र कारणं मृद्धटादिवत् ।
नाना परिणमत्येष परिणामः प्रकीर्त्तितः ॥ ९ ॥
विकृताविकृतत्वाभ्यां परिणामो द्विधा मतः ।
विकृतं सत् परिणमेत् कारणं कार्यरूपतः ॥ १० ॥

---

१—वादत्रयमध्ये । २—यत्र चतुर्णां परमाणुरूपाणां वाय्वादीन नित्यता, कार्यरूपाणि अनित्यानि ( वाय्वादीनि ) तेषां ( तत्तत्परमाणूनां ) आरम्भतोऽभवन् इत्यादि, 'इत्यादिरूप आरम्भवादस्तार्किकसंमत' इत्यन्तोऽन्वयः । ३—पृथिव्यादि परमाणूनां संयोगारम्भतः सृष्टिरिति नैय्यायिका मन्यन्ते । ४—संदिग्धोऽर्थः ।

न पुनः कारणात्मत्वं[1] विकृतः सोऽभिधीयते ।
दुग्धाद्दधि यथा जातं पुनर्दुग्धं न जायते ॥ ११ ॥
कार्यात्मना परिणमेत्कारणं त्वविकारि सत् ।
पुनः कारणरूपत्वमेषो[2]ऽविकृत उच्यते ॥ १२ ॥
नानाभूषादिरूपेण रजतं परिणामि हि ।
मध्ये तदेव चान्तेऽपि तत्[3]पुनः स्याद्विलापने ॥ १३ ॥
असौ वेदान्तसिद्धान्तः शुद्धान्तःकरणप्रियः ।
परिणामो ह्यविकृतः साक्षाच्छ्रुत्यादिसंमतः ॥ १४ ॥
'तदात्मानं स्वयमकुरुते'ति परिणामिता ।
अतः सूत्रेऽ'प्यात्मकृतेः प[4]रिणामा'दितीरणा ॥ १५ ॥
सुवर्णमविकार्येव नाना परिणमत्यदः ।
शिष्यते स्वयमेवान्ते मध्ये व्यवहृतिः परा ॥ १६ ॥
सर्वाकारैर्ब्रह्म तथैवैकं परिणमत्यतः ।
विकारो निर्विकारस्य कथंचिन्नैव जायते ॥ १७ ॥
'यथा सुवर्णं सुकृतं पुरस्तात् पश्चाच्च सर्वस्य हिरण्मयस्य
मध्ये तदेव व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत्' १८
इत्थं भगवता स्वस्याविकारित्वं समन्वये ।
उक्तं सदृष्टान्तमिदमन्यत्राऽपि बहु स्फुटम् ॥ १९ ॥

---

१—प्राप्त इति शेषः । २—प्राप्त इति शेषः । ३—रजतम् ।
४—'तदात्मानꣳस्वयमकुरुते'त्यादौ स्वस्यैव कृतेर्ब्रह्मैव जगत्कारणम् । आत्मनएव कृतिः कथं संभवतीत्याशंक्याह—'परिणामात्' सर्वभवनसमर्थत्वाद्ब्रह्मण एव परिणामाद्धेतोः । (१—४—२३)।

'उभयव्यपदेशात्त्वहिकुण्डलवदि'त्यतः ।
व्यासोऽधिकरणं प्राहाऽविकाराय समन्वये ॥ २० ॥
स निर्गुणोऽनन्तगुणः परिणाम्यविकारवान् ।
विरुद्धमित्याद्युभयं वेदे यद्व्यपदिश्यते ॥ २१ ॥
तस्माद्ब्रह्माखिलाकारं सरलाकृतिरप्यहिः ।
स्वेच्छया कुण्डलाकारोऽविकार्य्येव प्रजायते ॥ २२ ॥
तैजसानां तु सर्वेषां भाष्ये भाष्यविकारिता ।
दृष्टान्ता बहवः स्पष्टाः सुबोधिन्यादिषूदिताः ॥ २३ ॥
चिन्तामणेः कल्पतरोः कामधेनोः समुत्थिताः ।
पदार्थाः परिदृश्यन्ते विक्रियन्ते न ते क्वचित ॥ २४ ॥
विकृतः परिणामस्तु न स ब्रह्मणि युज्यते ।
वेदाद्यनुपदोक्तस्याविकारित्वस्य बाधनात् ॥ २५ ॥

---

१—तुः पूर्वपक्षव्यावृत्त्यर्थकः । अर्थात्—न हि ब्रह्मस्वरूपनिर्णयो युक्त्या कर्तुं शक्यः । शब्दैकगम्यस्य ब्रह्मणः स्वरूपनिर्णयः शब्देनैव भवति । वेदे च निर्गुणत्वेनाऽनन्तगुणत्वेनोभयरूपेण कथनादुभयरूपं ब्रह्मेति मन्तव्यम् । नन्वेकः कथमनेकधा भवति तत्राह—अहिकुण्डलवत् । यथा ह्येक एव सर्प ऋज्वाद्यनेकाकारः कुण्डलाकारश्च भवति तथा । ( ३—२—२७ ) । २—वेदादिभिरनुपदं किञ्चित्पूर्वमेवोक्तस्येति ।

'तथापि भूमन्[1] महिमाऽगुणस्य ते
विबोद्धुमर्हत्यमलान्तरात्मभिः ।
अविक्रियात् स्वानुभवादरूपतो
ह्यनन्यबोध्यात्मतया न चान्यथा' ॥ २६ ॥
'ब्रह्म ज्योतिर्निर्गुणं निर्विकार'मिति चान्तिमे ।
अनेकत्रापि गीतायामविक्रियमुदीर्यते ॥ २७ ॥
प्रलयः किञ्च सर्वेषां न स्यात्तत्र तथा सति ।
कार्याणां कारणात्मत्वासंभवाद्विकृतौ[2] पुनः ॥ २८ ॥
'तज्जलान्यत्प्रयन्ती'त्यादिश्रुतौ स तु रूपितः ।
स्वस्मिन् विलापिते विश्वे ब्रह्मैकमवशिष्यते ॥ २९ ॥
'नष्टे[3] लोके द्विपरार्द्धावसाने
महाभूतेष्वादिभूतं गतेषु ।
व्यक्तेऽव्यक्तं कालवेगेन याते
भवानेकः शिष्यतेऽशेषसंज्ञः' ॥ ३० ॥

---

१—हे सर्वत्र विद्यमान दुर्बुद्धिभिरज्ञातगुणस्याऽपि ते महिमा ( तत्वं ) तपःप्रवचनानुग्रहादिभिर्निर्गतवासनादोषैरेवान्तःकरणवृत्तिभिर्बोद्धुमर्हति ( योग्य इत्यर्थः ) । कुत इति चेत्—अन्यैरिन्द्रियादिभिर्न बोध्य आत्मा यस्य सः । तस्य भावस्तत्ता तया । अन्यथा न । तत्र त्रयो हेतवः—जन्मादिविकाररहितत्वात् । स्वयं प्रकाशत्वात् । रूपरहितत्वात् । ( श्रीभा. १० स्कं. १४ अ. ६ श्लो. ) २—कार्ये यदि विकारः स्यात्तर्हि लये सर्वकार्याणां कारणात्मकत्वभवनमसंभवि स्यादित्यर्थः । ३—कालवेगेन हिरण्यगर्भायुरवसाने लोके जगति महा-

क्रीडार्थमाविष्कृतवान् बहुत्वेच्छुः स्वरूपतः ।
ऊर्णनाभिर्यथा तन्तूंस्तैर्गेहमविकारवान् ॥ ३१ ॥
आविर्भावे रतीच्छैव हेतुः श्रुत्यादिसंमतः ।
यथा काण्वश्रुतौ पूर्वं रमणाभाव उच्यते ॥ ३२ ॥
'स वै नैव रेमे'
'तस्मादेकाकी न रमते'
'सद्वितीयमैच्छत्' 'स हैतावानास'
एकाकिनो रत्यभावाद्द्वितीयेच्छा विभोरभूत् ।
वस्तुतो न द्वितीयं तु शुद्धाद्वैतस्य वर्त्तते ॥ ३३ ॥
इति स स्वयमेवास रूपनामविभेदतः ।
अनेकधाऽथ वैचित्र्यं तत्तद्धर्मतिरोभवात् ॥ ३४ ॥
सर्वधर्मतिरोधानात्तद्धर्मस्यैव दर्शनम् ।
अन्यत्रान्यस्य धर्मस्य चेति भेदो महानिह ॥ ३५ ॥
एवंविधप्रपञ्चेन स्वात्मना क्रीडति प्रभुः ।
'क्रीडार्थमात्मन इदं त्रिजगत्' ते कृतं यतः ॥ ३६ ॥

---

भूतादिषु लीने, महाभूतादिषु च तन्मात्रासु लीनेषु, व्यक्ते तन्मात्रादिजगति च अक्षरे भगवदंशे तद्धाम्नि वा लीने, भवानशेषसंज्ञाधिष्ठानभूतोऽवशिष्टो भवति । (श्रीभा. १० स्कं. ३ अ. २५ श्लो०) ।
१—तत्तद्धर्माणां तिरोभवनादित्यर्थः । २—ब्रह्मरूपत्वाद्यद्यपि सर्वं सर्वमयं तथापि घटादिषु जलानयनादिधर्मस्यैव दर्शनं तदितरेषां तु तदिच्छया तिरोधानमिति महान्भेद इत्याद्यन्वयः ।

'क्रीडाभाण्डमिदं विश्व'मित्यादिष्विदमुच्यते ।
ऊर्णनाभिर्हि रमते तन्तुभिर्गेहतोऽथवा ॥ ३७ ॥
सर्वशक्तेस्तथेच्छातो मूढैर्नानेव दृश्यते ।
ब्रह्मैवैकमिदं सर्वं वस्तुतस्तु विचारणे ॥ ३८ ॥
'यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा ।
स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वरः'[1] ॥ ३९ ॥
इत्यादिना भागवतेऽखिलस्य ब्रह्मता मता ।
'एवं चात्मा कात्स्न्र्य'मिति सूत्रेऽप्येतन्निरूप्यते ॥४०॥
कटकं मुद्रिकां हेम्नः कुण्डलं खण्डकानपि ।
हेमत्वेनैव गृह्णाति यथा बुद्धिस्तदर्थिनः ॥ ४१ ॥
तथा ब्रह्मविदो बुद्धिर्यत्त्वियद्भेददर्शनम् ।
एकस्योक्तं भागवते तथा जानन्ति तद्दृढम् ॥ ४२ ॥
यथा हिरण्यं बहुधा समीयते
नृभिः क्रियाभिर्व्यवहारवर्त्मसु
एवं वचोभिर्भगवानधोक्षजो
व्याख्यायते लौकिकवैदिकैर्जनैः[2] ॥ ४३ ॥
एवं क्रीडन् प्रपञ्चात्मा यदाऽन्ता रतिमिच्छति ।
तदात्मनि विलाप्येदं रमते कारणे वशी ॥ ४४ ॥
सुखार्थं सर्वजीवानां करोति लयमात्मनि ।
व्यधाद्यथेह क्षणदां सुख्यन्त्यात्मरतौ हि ते ॥ ४५ ॥

---

१—श्रीमा. स्कंध. १०. अ. ८५. श्लो. ४ । २—श्री. भा. स्कं. १२. अ. ४. श्लो. ३० ।

आहुर्वेदा हि 'यत्रैतत्पुरुषः स्वपिती'त्यतः ।
चिति लीनास्तदा जीवा न विदन्ति तु किञ्चन ॥४६॥
दुःखात्ययो यथा पुंसा सुषुप्तावनुभूयते ।
नानन्दानुभवस्तत्र स तु मोक्षे[1] प्रवक्ष्यते ॥ ४७ ॥
'अन्ने प्रलीयते मर्त्य' इत्याद्युक्तप्रकारतः ।
जडानां प्रलयस्तत्र सर्वेषां सर्वकारणे ॥ ४८ ॥
आनन्दांशान्तरात्मान आनन्दे, चिति चेतनाः ।
जडाः सदंशे, वर्त्तन्ते विलीनाः सुप्तशक्तयः ॥ ४९ ॥
उद्गच्छन्ति तदिच्छातः पुनस्ते तत्तदंशतः ।
तत्तदंशेषु लीयन्त ऊर्णनाभ्यास्यतन्तुवत् ॥ ५० ॥
'यथोर्णनाभिः सृजते गृह्णते च
　　यथा पृथिव्यामोषधयः संभवंति ।
यथा सतः पुरुषात् केशलोमानि
　　तथाऽक्षरात् संभवतीह विश्वम्' ॥ ५१ ॥
मुण्डकोपनिषद्येतद्बृहदारण्यकादिषु ।
श्रुतं भागवते चेदं स्कन्ध एकादशे स्फुटम् ॥ ५२ ॥

---

१—स्वमतप्रसिद्धे मोक्ष इत्यर्थः । सर्वे हि मोक्षं दुःखाभावमात्रं मन्यंते । दुःखाभावश्च चिद्रूप आत्मनि ज्ञाते भवति । न तु सुखानुभवः । स तु भगवत्साक्षात्कारेण भवति स एव च वस्तुतो मोक्षः । न च दुःखात्ययएव सुखानुभवोऽस्तुः न । द्वयोर्भेदेनैव लोके प्रतीतेः ।

'यथोर्णनाभिर्हृदयादूर्णां सन्तत्य वक्त्रतः ।
तया विहृत्य भूयस्तां ग्रसत्येवमधीश्वरः' ॥ ५३ ॥

तस्मात्सर्वलयस्थानं सर्वाविर्भावकारणम् ।
चित्ते स्थिरं परंब्रह्मास्त्वचिन्त्यानन्तशक्तिमत् ॥५४॥

यस्माज्जीवाः स्वांशा अणवोऽन्तर्यामिणो जडाश्चासन् ।
साकारं श्रुतिसारं वारं वारं स्मराखिलाधारम् ॥ ५५ ॥

इति श्रीमद्वल्लभाचार्य्यमतवर्त्तिश्रीव्रजवल्लभचरणानुचरपञ्चनदी-घनश्यामभट्टात्मजगोवर्द्धनशीघ्रकविविरचिते वेदान्तचिन्तामणावविकृतपरिणामनिरूपणं नाम षष्ठं प्रकरणम् ॥ ६ ॥

## जीवोद्गमसंसारनिरूपणं नाम सप्तमप्रकरणम् ।

अंशा[1] जीवा यतो वह्नेर्विस्फुलिंगवदुद्गताः ।
संसरन्ति च मुच्यन्ते नमोऽस्मै सर्वशक्तये ॥ १ ॥

---

१—स्वांशाः करपदादिवत् । न तु विभिन्नांशाः पुत्रादिवत् । विभिन्नांशत्वे एकविज्ञानेन सर्वविज्ञानं श्रुत्युक्तं न स्यात् । ननु निरवयवस्य ब्रह्मणोऽशा जीवा इति तु विरुद्धमिवोच्यते । स्याद्विरुद्धमिव यदि श्रुत्या नोच्येत । उच्यते तु तया ब्रह्मणो निरवयवत्वं विस्फुलिंगवदुद्गमनं च जीवानाम् । तच्छ्रुतिप्रामाण्यवादिना तथैव मन्तव्यम् । अत एवोक्तं सूत्रकर्त्रा **'श्रुतेस्तु शब्दमूलत्वात्'** । येत्वत्र पूर्वं वेदानुरोधाद्विरुद्धधर्माश्रयं ब्रह्मेति स्वीकृत्याऽपि पश्चाल्लोकानुरोधेन **'ननु शब्देना'**पीत्यादिना स्वकौशलं दर्शयन्ति तेषां मते युक्त्यनुरोधेन स्पष्टं

व्योमेव व्यापकं ब्रह्म सर्वत्रैकरसं सदा ।
सच्चिदानन्दरूपञ्च पूर्णं निर्बाधमक्षयम् ॥ २ ॥
'यच्च किंचित् जगत्सर्वं[1] दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' ॥ ३ ॥
'सत्यं विज्ञानमानन्दं ब्रह्म' 'पूर्णमदः' श्रुतेः ।
सर्वक्रियाभिः सर्वत्र नित्यैर्धर्मैस्तथाखिलैः ॥ ४ ॥
'सर्वतः पाणिपादं[1] तत्सर्वतोक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति' ॥ ५ ॥
मायया सर्वतः सांशं स्वशक्त्याऽचिन्त्यरूपधृत् ।
तस्याऽप्रतिहतेच्छस्य बहुत्वेच्छोदिताऽभवत् ॥ ६ ॥
सा 'बहुस्यां प्रजायेये'त्यादि श्रुत्यादिसंमता ।
तदेच्छया प्रदेशे तदुद्गमार्थं तिरोदधे ॥ ७ ॥
सृष्टिकाले त एवान्ताः परिच्छेदा निरूपिताः ।
तथा 'हन्त तिरोसानी'त्यादिवाक्यैर्निरूपितम् ॥ ८ ॥
काण्वाद्युपनिषत्स्वेतत्तथा स्मृतिपुराणयोः ।
'विभक्तिरप्रतर्क्यस्याविभक्तस्यापि युज्यते'[2] ॥ ९ ॥

---

वेदाप्रामाण्यं स्वीकृतं भवति । ननु 'ग्रावाणः प्लवन्ते' इत्यादीनामसम्बद्धानां वेदोक्तानामप्यर्थानां कथमिव प्रामाण्यं स्वीकृतं स्यात् । नैष दोषः । प्रामाण्यं नाम लोकाऽनधिगतार्थावगाहित्वे सति स्वबुद्धिकार्यहेतुककादाचित्काऽयोग्यताज्ञानानपनोद्यो भाव इति । १—श्रीगीतोपनिषत् । २—श्रीभा. ।

'अविभक्तं[१] विभक्तेषु विभक्तमिव च स्थितम्' ।
चित्प्रधाना परिच्छिन्ना अंशा व्युदचरंस्ततः ॥ १० ॥
जीवाः क्षुद्रा विस्फुलिंगाः सुदीप्तात् पावकाद्यथा ।
मुण्डकोपनिषत्स्वेष दृष्टान्तोऽन्यत्र चोदितः ॥ ११ ॥
तदेतत् सत्यं[२] यथा सुदीप्तात् पावका-
द्विस्फुलिंगाः सहस्रशः प्रभवन्ते सरूपाः ।
तथाऽक्षराद्विविधाः सोम्य भावाः
प्रजायन्ते तत्र चैवापि यन्ति ॥ १२ ॥
'यथा[३] सुदीप्तात् पावकात् क्षुद्रा विस्फुलिंगा व्युच्चरन्त्येवं तस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्व एवात्मानो व्युचरन्ति रमणीय[४]चरणाः कुपूय[५]चरणा इति' ॥ १३ ॥
सर्वेऽन्तर्यामिणो जाता आनन्दांशस्वरूपतः ।
सदंशेन जडा[६] येभ्यः कृता देहा अनेकधा ॥ १४ ॥
तिरोभावयदानन्दं जीवे तं[७] च चिंतं[८] जडे ।
आनन्दांशतिरोधानान्निराकारावुभाव[९]पि ॥ १५ ॥
चतुर्भुजादिर्न तयोस्तादृग्भगवदाकृतिः ।
आनन्दरूपमेवाऽस्य हस्तपादादिकं यतः ॥ १६ ॥

---

१—श्री गी. । २—द्वितीयमुण्डके १ खण्डः । ३—छान्दोग्ये. । ४—पुण्यचरित्राः । ५—पापचरित्राः । ६—पंचतन्मात्राभूतप्रभृतयः । ७—आनन्दांशम् । नानात्वायेति सर्वत्र शेषः । ८—चिदंशम् । ९—जडजीवौ भगवदाकाररहिताविल्यर्थः । आनन्द एवाकारसमर्पकस्तस्य च तिरोभावात् ।

'प्रजायेय' प्रकृष्टोऽहं जायेयेतीष्टवांस्तु यत् ।
ऐश्वर्यादेः सविषयत्वाय धर्मांस्तथाऽकरोत् ॥ १७ ॥

षड्धर्मा भगशब्देनैश्वर्यं वीर्यं यशस्तथा ।
श्रीर्ज्ञानञ्च विरागश्च नित्या भगवतोऽखिलाः ॥ १८ ॥

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ १९ ॥

ऐश्वर्यादितिरोभावाज्जीवानां दीनतादिकम् ।
तिरोहितं ततो ह्यस्य सूत्रे बन्धविपर्ययौ ॥ २० ॥

बन्धश्चतुष्टयाभावाद्द्वयाभावाद्विपर्ययः ।
पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ।
अत्रत्ये श्रीमदाचार्यैर्भाष्ये तत् सुप्रपञ्चितम् ॥ २१ ॥

मायया निर्मिते विद्याविद्ये शक्ती प्रभोः स्वयम् ।
जीवस्यैव ततो बन्धो मोक्षो नांशान्तरस्य सः ॥ २२ ॥

---

१—तिरोऽभावयत् । २—अपरिच्छिन्नस्य । ऐश्वर्यादाविदमन्वेति । विष्णुपुराणस्थं पद्यम् । ३—ऐश्वर्यादीति शेषः । ४—उक्ताविति शेषः । ५—ऐश्वर्यादिचतुष्टम् । ६—ज्ञानवैराग्यद्वयतिरोभावात् स्थूलोह'मित्यादिदेहाध्यासादिविपर्ययः । ७—कथमस्य दुःखित्वमित्याशंक्य परिहरति, तुशब्दः । अस्य जीवस्यैश्वर्यादि तिरोहितम् । तत्र हेतुः—पराभिध्यानात् । परस्य भगवतोऽभिध्यानं तस्मात् । ततः बन्धविपर्ययौ भवतः । (३-२-५)

'विद्याविद्ये मम तनू विद्धयुद्धव शरीरिणाम् ।
मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते ॥ २३ ॥
'एकस्यैव ममांशस्य जीवस्यैव महामते ।
बन्धोऽस्याविद्यया नादिर्विद्यया च तथेतरः' ॥ २४ ॥
सुखदुःखाद्यनुभवोऽपि जीवस्यैव केवलम् ।
चिदभावाज्जडेऽन्तर्यामिण्यानन्दातिरोभवात् ॥ २५ ॥
स्वरूपाज्ञानमेकं हि पर्व देहेन्द्रियासवः ।
अन्तःकरणमेषां हि चतुर्द्धाऽध्यास उच्यते ॥ २६ ॥
पञ्चपर्वा त्वविद्येयं यद्बद्धो याति संसृतिम् ।
इत्यस्याः पञ्चपर्वाण्याचार्यपादा न्यरूपयन् ॥ २७ ॥
अहंताममतारूपः संसारो यो मृषोदितः ।
अविद्योपाधितो मिथ्या मृगतृष्णेव दृश्यते ॥ २८ ॥
विपरीतक्रमेणोक्तमध्यासानां चतुष्टयम् ।
एवं पर्वसु सिद्धेषु देहेऽहंभाव इष्यते ॥ २९ ॥
तत्सम्बन्धिनि गेहादौ ममताऽपि ततो मता ।
स संसारो भ्रमः स्वप्नो मायेत्यादीह कथ्यते ॥ ३० ॥
अविद्योपाधितो ह्येषोऽज्ञानात्मेह प्रतीयते ।
कामलोपहिताक्षस्य शङ्खे पीतत्ववन्मृषा ॥ ३१ ॥

---

१—श्रीभा. स्कन्ध. ११. अ. ११. श्लो. ३४. । २—श्रीभा. ११ स्कं । ३—अंतःकरणाध्यासः प्रथमः । सर्वतो बलवानिति दर्शनायैव तु चतुर्थ उक्तः । एवं विपरीतक्रमेणोक्तम् । ४—वेदपुराणादौ । ५—रोगविशेषो वैद्यके प्रसिद्धः ।

उपाधेः साधनैर्नाशे यथावस्थितमीक्ष्यते ।
ब्रह्मत्वं क्रीडनार्थत्वं तथाऽविद्यानिवर्त्तने ॥ ३२ ॥

'यथाम्भसा[१] प्रचलता तरवोऽपि चला इव ।
चक्षुषा भ्राम्यमाणेन दृश्यते चलतीव भूः' ॥ ३३ ॥

देहादीनां विरागार्थं[२] सदृष्टान्तमसत्यता ।
संसारमेव तन्निष्ठमभिप्रेत्य कृता क्वचित् ॥ ३४ ॥

विप्रोऽपि मायया स्वप्ने राजाऽहमिति मन्यते ।
तत्तद्देहगतो नैवं ब्रह्मांशत्वं स्मरत्यसौ ॥ ३५ ॥

'स्वप्ने[३] यथा पश्यति देहमीदृशं
मनोरथेनाभिनिविष्टचेतनः ।
दृष्टश्रुताभ्यां मनसाऽनुचिन्तयन्
प्रपद्यते तत्किमपि ह्यपस्मृतिः' ॥ ३६ ॥

---

१—श्रीभा. ७ स्कं. २ अध्या. २३ श्लो. । २—ननु प्रपञ्चमिथ्यात्वप्रतिपादकानां पुराणादिवाक्यानां कथं सङ्गतिस्तत्राह—**विरागार्थ**मित्यादि । वस्तुतस्तु देहादिप्रपञ्चो ब्रह्मकार्यत्वात्सत्य एव तथापि जनस्तथा जानीयान्न विरक्तः स्यात्तदर्थं तथाविधमपि वैराग्यार्थमसत्यमित्युक्तं क्वचित् । ननु सर्वस्य ब्रह्मात्मकत्वे देहादावपि रक्तिरेवापेक्ष्यतां न पुनर्विरक्तिः । नैतत्सारम् । **'एकविज्ञानेन सर्वविज्ञानं'** प्रतिज्ञातमिति देहादौ ब्रह्मत्वेन यदि रक्तिः स्यात्को वारयति । न तु तथा । लोके हि सर्वेषां भौतिकोयं मम देह इत्येवासक्तिर्भवति न तु ब्रह्मत्वेनेति तत्र विरागताऽपेक्षितैव । ३—श्री. भा. स्कन्ध. ११. अ. १. श्लो. ४१. ।

इत्यहंभावमापन्नो देहे मिथ्यावियोगिनि ।
अवशः कार्यते सर्वमीश्वरेण विमूढधीः ॥ ३७ ॥
देहात्मभावो देहेनेशेच्छया कृतकर्मसु ।
'अहंकारविमूढात्मा कर्त्ताहमिति मन्यते'[1] ॥ ३८ ॥
वस्तुतस्त्वीश्वरेणेह तत्तद्द्वारेच्छयाऽखिलम् ।
कार्यते क्रीडया तत्राऽहंकर्त्तेति मतिर्मृषा ॥ ३९ ॥
फलसाधनयोः प्रोक्तः 'कर्त्ता कारयिता हरिः' ।
'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते'[1] ॥ ४० ॥
'यथा[2] दारुमयी योषा यथा यन्त्रमयो मृगः ।
एवं भूतानि मघवन्नीशतन्त्राणि विद्धि भोः' ॥ ४१ ॥
यथा भ्रमरिकादृष्ट्या भ्राम्यतीव महीयते ।
चित्ते कर्त्तरि तत्रात्मा कर्त्तेवाऽहंधिया स्मृतः ॥४२॥

उद्दिश्य संसृतिपदमहंताममते अपि ।
सर्वत्र तन्निवृत्त्यैव मुक्तिर्नैवान्यथोच्यते ॥ ४३ ॥
'एतद्द्वारो[3] हि संसारो गुणकर्मनिबन्धनः ।
अज्ञानमूलोऽपार्थोऽपि पुंसः स्वप्न इवेयते' ॥ ४४ ॥
तेएतदधिगच्छन्ति विष्णोर्यत्परमं पदम् ।
अहंममेति दौरात्म्यं न येषां देहगेहयोः ॥ ४५ ॥

१–श्रीगीतोपनिषत् । २–श्रीमद्भागवते ६ स्कं. ११ अ. ।
३–श्री. भा. स्कन्ध. ७. अ. ७. श्लो. १७ । ४–श्रीभागवते.
स्कन्ध. ११ ।

इत्यादिवचनैस्तादृग्ज्ञुधाप्रत्यय एव सः ।
तन्निवृत्या मता मुक्तिर्देहादिस्तु न संसृतिः ॥ ४६ ॥

नैवात्मनो न देहस्य संसृतिः[2] सुविविक्तयोः ।
अविवेकस्तयोर्योऽसावथ तस्यैव संसृतिः ॥ ४७ ॥

एकादशस्याष्टाविंश इति भेदेन रूपणात् ।
देहादेः संसृतित्वे तु जीवन्मुक्तिर्न युज्यते ॥ ४८ ॥

प्रत्यक्ष एव देहादिर्मुक्तस्यापि तु जीवतः ।
सति संसरणे मुक्तिः कुतः शास्त्रविरोधिनी ॥ ४९ ॥

तस्मादहंता देहादावध्यासाभावतो न[3] हि ।
ममताऽहन्त्वमूला तु तन्निवृत्त्या निवर्त्तते ॥ ५० ॥
'आत्मलाभे तु विद्यातो मुक्तो जीवन् भविष्यति' ।
देहसंसारभेदोऽतः सिद्धान्तः श्रुतिसंमतः ॥ ५१ ॥
सम्यक् प्रकारं सरणं स्वरूपाच्चयवनं दृढम् ।
ब्रह्मांशस्यान्यथाभावस्तत्संसरणमुच्यते ॥ ५२ ॥
असत्या संसृतिः सत्यः प्रपंच इति निर्णयः ।
ऐंद्रजालिकवत् स्पष्टं साऽसत्याऽपि प्रतीयते ॥ ५३ ॥

---

१—देह आत्मभावोऽध्यास इति यावत् । २—अहंताममतयोः संसृतित्वात्तस्याश्च चित्युपलभ्यमानत्वात्तस्य चेतनस्य तु ब्रह्मरूपत्वात्सा न संभवति । न च देहस्यैव सा वाच्येति वाच्यम् । जडत्वात् । अतःपृथक् पृथक् विद्यमानयोर्देहात्मनोरविवेकवतोऽर्थाद्देह आत्मभाववत, आत्मनि च देहभाववत एव संसार इत्यर्थः । ३—नश्यतीत्यर्थः ।

जीवा यस्य स्वांशा न प्रतिबिम्बा न चाभासाः ।
यत्कृतसंसरणास्तच्चरणं शरणं व्रजामि भवतरणम् ५४

इति श्रीमद्वल्लभाचार्य्यमतवर्त्तिश्रीव्रजवल्लभचरणानुचरपञ्चनदी-घनश्यामभट्टात्मजगोवर्द्धनशीघ्रकविविरचिते वेदान्तचिंतामणौ जीवोद्गमसंसारनिरूपणं नाम सप्तमं प्रकरणम् ॥ ७ ॥

## जीवान्तर्यामिशुद्धाद्वैतार्थनिरूपणं नामाऽष्टमं प्रकरणम् ।

जीवान्तर्यामिणौ स्वांशावणुकौ भोक्तृसाक्षिणौ ।
येनान्तःस्थापितौ ज्ञाज्ञौ नमस्तस्मै कृपालवे ॥ १ ॥

'द्वा सुपर्णा[1] सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
एकस्तयोः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' २

'सुपर्णावेतौ[2] सहजौ सखायौ
यदृच्छया कृतनीडौ च वृक्षे ।
एकस्तयोः खादति पिप्पलान्न-
मन्यो निरन्नोऽपि बलेन भूयान्' ॥ ३ ॥

भिन्नौ प्रतिशरीरं तावेकैकस्मिन् द्वयोरपि ।
प्रवेशाद्धंसरूपेण हृदि भागवते यथा ॥ ४ ॥

'हंसावहं[3] च त्वं चार्य सखायौ मानसायनौ ।
'गुहां प्रविष्टावात्मानौ' सूत्रेऽप्येतद्गुहा तु हृत्' ॥५॥

---

१—मुण्डकोपनिषदि २—एकादशस्कन्धे.—११ अ. ६ श्लो. ।
३—श्री. भा. चतुर्थः स्कंधः ।

'यथा[1] व्रीहिर्वा यवो वा श्यामाको वा श्यामाक-
तण्डुलो वैवमयमन्तरात्मन् पुरुषो हिरण्मयः'॥६॥
इत्यादिश्रुतिभी रूपं तस्योक्तं स्मृतिभिस्तथा ।
'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' ॥ ७ ॥
'हृदि[2] हृदि धिष्ठितमात्मकल्पितानाम्' ।
स विद्यमानानन्दत्वादैश्वर्याज्ज्ञानतस्तथा ।
न दुःखसुखभोक्तैषां साक्षी द्रष्टैव किं तु सः ॥ ८ ॥
तद्भेदवाक्ये 'द्वावीशानीशौ ज्ञाज्ञा'विति स्फुटम् ।
'संभोगप्राप्तिरिति[3] चेन्न वैशेष्याच्च' सूत्रतः ॥ ९ ॥
वैशेष्यं जीवतस्तत्रानन्दधर्माविलोपनात्[4] ।
द्वैतं सृष्टौ तयोरेव न जीवब्रह्मणोः क्वचित् ॥ १० ॥
अन्तर्यामिब्राह्मणेऽन्तर्यामिपादे च विस्तृतम् ।
रूपं तस्य ततः स्पष्टं भाष्यादेरवधार्यताम् ॥ ११ ॥
सच्चिन्मात्रश्चित्प्रधानो ब्रह्मस्वांशो हृदि स्थितः ।
विसर्पिचैतन्यगुणोऽणुर्जीवो विद्यया सितः[5] ॥ १२ ॥

---

१—वाजसनेयिशाखायाम् । २—श्रीभा. स्कन्ध. १ । ३—ननु जीववद्यदि भगवानपि हृदि तिष्ठेत्तर्हि तस्यैवाऽस्यापि सुखदुःखादि-भोगः प्राप्त इति चेन्नेदमुचितम् । ईश्वर आनन्दादिधर्मस्य विशेष इति तस्य न भोगः । ( अ. १—पा. २—सू. ८ ) ४—आनन्दश्च ऐश्व-र्यादिधर्माश्च तेषामविलोपनमतिरोभाव इति यावत् । तस्मात् ।
५—बद्धः ।

'एँषोऽणुरात्मा चेतसा वेदितव्यो
यस्मिन् प्राणः पंचधा संविवेश' ।
इत्यादिश्रुतिभिस्तस्याणुमात्रत्वं निरूप्यते ॥ १३ ॥
'नाँणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्' ।
इत्यादिसूत्रतो व्यासचरणैर्निरणायि तत् ।
'स एष आत्मा हृदिही'त्यादिभिः श्रुतिभिरीरितम् १४
'अँवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि' ।
व्यासोऽप्यसूत्रयदिति तस्माद्धृद्येव संस्थितः ॥ १५ ॥
हृत्स्थो गुणात् सचैतँन्यां सम्पूर्णां तनुते तनुम् ।
कोणस्थितो यथा दीपोऽखिले गेहे प्रकाशते ॥ १६ ॥
कस्तूरिका स्थितैकत्राभिव्याप्नोति स्वगन्धतः ।
देशं महान्तं, देहं स चैतन्येन तथाऽखिलम् ॥ १७ ॥
व्यासो विसर्पिगुणतां 'गुणाद्वाँलोकव'त्तथा ।
'व्यँतिरेको गन्धवच्चे'त्यादिदृष्टान्ततोऽवदत् ॥ १८ ॥

---

१—मुण्डके । २—ननु जीवोऽणुर्नाऽणुत्वविरुद्धा 'एष महानज आत्मेति' व्यापकत्वश्रुतिर्मिलतीति चेन्न, सा व्यापकत्वश्रुतिर्ब्रह्मप्रकरणे पठितेति न जीवाणुत्वबाधिका । ३—ननु चन्दनादेरवस्थितिरेकत्र निश्चिता न पुनर्जीवस्येति दृष्टान्तवैषम्यान्नाणुः स इति चेन्न, वेदे जीवस्य स्थितिरपि हृदि स्वीकृतेति । ४—चेतनवतीमित्यर्थः । विधेयविशेषणमेतत् । ५—दीपप्रभादिवत्स्वगुणेन जीवः सर्वदेहे चैतन्यं करिष्यतीत्यर्थः । (अ. २–पा. ३–सू. २५) । ६—विशेषेणातिरेकोऽधिकदेशविसर्पित्वमिति यावत् । यथा पुष्पलशुनादिसगन्धपदार्थानां

शांकरास्तार्किका जीवमेकं व्यापकमालपन् ।
जीवैकत्वे सर्वमुक्तिरेकमुक्त्या भविष्यति ॥ १९ ॥
सति बन्धे नैव मोक्षो, यात्येकः पुण्यतो दिवम् ।
अन्यः पापेन नरकमिति श्रौतं न युज्यते ॥ २० ॥
'सर्वे[1] जीवा' बहुवचः श्रुत्युक्तं च विरुध्यते ।
व्यापकस्योद्गमो नैव, नोपाधेर्जीव[2]कल्पनात् ॥ २१ ॥
यत्प्रयन्तीति जीवानां प्रलयो नेह संभवेत् ।
ज्ञानात्तत्र प्रवेशोऽपि विशते तदनन्तरम् ॥ २२ ॥
किं च जीवः स्वतन्त्रो वा ब्रह्मैवोपहितं तथा ।
आद्ये द्वैतं, बन्धमोक्षौ ना[3]पि ब्रह्मात्मता भवेत् ॥२३॥
न स्यात् कस्यापि मरणं व्याप्तेर्जीवस्य तादृ[4]शः ।
द्वि[5]तीये तु न त[6]द्व्याप्तिः किं तु स्याद्ब्रह्मणो हि सा॥२४॥
आकाशं व्यापकं व्याप्तिर्घटाकाशस्य न क्वचित् ।
उपाधिनाशो मोक्षश्चेज्जीवना[7]शः स कथ्यताम् ॥ २५ ॥
सर्वज्ञं निर्गुणं पूर्णं ब्रह्म बद्धमुपाधिना ।
तदेवोपाधितो मुक्तं साधनैर्विप्लवो महान् ॥ २६ ॥

---

गुणोऽधिकदेशवर्ती तथा जीवस्याऽपीति न दोषः । ( २—३—२६ )
१—'सर्वे जीवा व्युच्चरन्ती'त्यादि बहुवचनमिति यावत् । २—प्राणाद्युपाधेरेवोद्गम इति तु न वक्तुं शक्यम् । त्वन्मते तस्य जीवभ्रान्तिकल्पितत्वादित्यर्थः । ३—देहलीदीपकन्यायेन पूर्वोत्तरपदयोरिदमुभयोरन्वेति । ४—षष्ठयन्तम् । ५—उपहितं ब्रह्मैव जीव इति पक्षे । ६—तस्य जीवस्य व्याप्तिरिति भावः । ७—उपाधियुक्तस्यैव जीवत्वात् ।

उत्क्रान्तिगत्यागतयो वेदसूत्रादिसंमताः ।
व्यापकस्य न युज्येरंश्चेदुपाधेः प्रवक्षि[1] ताः ॥ २७ ॥
'तं प्राणोऽनूत्क्रामतीति'श्रुतिस्तर्हि विरुद्ध्यते ।
श्रुतेः स्मृतेश्च सूत्राणां न व्याप्तिस्तस्य[2] संमता ॥ २८ ॥
'नित्यः सर्वगतस्थाणु'र्ब्रह्म सर्वत्र यद्गतम् ।
सह तिष्ठति तेनाणुरचलैकार्थताऽन्यथा[3] ॥ २९ ॥
शरीरे गुणतो व्याप्तेः क्वचिद्व्यापकतोदिता ।
ब्रह्मवद्व्यापकत्वे तूक्तान्यश्रुत्यादिबाधनम् ॥ ३० ॥
शाङ्कराणां मते कर्तृ न प्रपञ्चस्य भोक्तृ च ।
धर्माकारक्रियात्यन्ताभाववद्ब्रह्म कथ्यते ॥ ३१ ॥
मायायां प्रतिबिम्बोऽस्य तत्कर्त्ता शबलाभिधः ।
प्रतिबिम्बस्त्वविद्यायां तस्य जीवोऽभिधीयते ॥ ३२ ॥
तद्रूपोपाध्यवच्छिन्ने[4] चैतन्ये ब्रह्मरूपिणि ।
अथवा तौ घठमठोपहिताकाशवत् कृतौ ॥ ३३ ॥
सत्वे तु शुद्धमलिने मायाविद्ये अनादिमे ।
तत्राऽवच्छिन्नपक्षस्तु संक्षेपेण निराकृतः ॥ ३४ ॥

---

१—वदसि । २—जीवस्य । ३—'नित्यः सर्वगतस्थाणु'रिति गीताश्लोके तु सर्वगतं ब्रह्म तेन सह हृदये तिष्ठतीत्यर्थो ज्ञेयः । अन्यथा ( स्थाणुरिति भिन्ने पदे स्वीकृते तु ) अचल इति पदेनैकार्थता तेन पौनरुक्त्यं स्यादित्यर्थः । ४—मायाऽविद्यारूपोपाधियुक्तं यद्ब्रह्मरूपं चैतन्यं तस्मिन्नेव जीवेशावितिकृतौ । यथा आकाश एकस्मिन्नेव घटमठोपाधियुक्ते घटाकाशमठाकाशाविति व्यवहार इति वा पक्ष इत्यर्थः ।

दृश्यते प्रतिबिम्बस्तु न वा[1]य्वादेर्निराकृतेः ।
न दृष्टो मलिनेऽप्येष मृदादावन्यथा भवेत् ॥ ३५ ॥
चेत्तादृग्ब्रह्मणस्तत्र किं न स्याद्वायुदारुणोः ।
अलीकं प्रतिबिम्बं, न जीवस्यालीकता क्वचित् ॥३६॥
श्रौतो गु[2]हायां नैकस्यां प्रवेशो युज्यते द्वयोः ।
इत्यादितत्त्वदीपे चोक्तं विद्वन्मण्डने बहु ॥ ३७ ॥
अविद्योपाधिरचितं जीवत्वमिति ते जगुः ।
पारतन्त्र्यं भगवतो द्वैतापत्तिश्च तन्मते ॥ ३८ ॥
अंशानां जीवभावस्त्वीशेच्छयोक्तप्रकारया ।
शक्त्याऽविद्योपाधिना तु संसार इति वैदिकम् ॥३९॥
तस्मादेवोद्गमस्तस्मिँल्लयो मध्ये च दृश्यते ।
कार्यात्मनेच्छया भेदो जडजीवान्तरात्मनाम् ॥ ४० ॥
शुद्धा[3]द्वैतमतः सिद्धं श्रुतिस्मृत्यादिसंमतम् ।
द्वीतं तयोरितं[4](?) ज्ञानं[5] तद्द्वैतं द्वीतमेव यत् ॥ ४१ ॥
कार्यकारणरूपं तदीशजीवात्मकं तथा ।
नामरूपात्मकं चेति त्रिविधं समुदाहृतम् ॥ ४२ ॥
द्विविधं दूषितं तत्राप्यग्रे तद्दूषयिष्यते ।
नामरूपात्मकं द्वैतं शाङ्कराणां यथोदितम् ॥ ४३ ॥

---

१—रूपाकारप्रयोजक एव प्रतिबिम्बो दृष्ट इति । २—'द्वासुपर्णे' त्यादिश्रुत्युक्तः । ३—शुद्धस्य मायासम्बन्धरहितस्य कार्यस्य कारणेन ब्रह्मणा सह अद्वैतं ऐक्यमित्यर्थः । ४—अयनं इतं भावे क्तः । ५—'ये गत्यर्थकास्ते ज्ञानार्थका' इति स्वीकारात् ज्ञानमित्यर्थः ।

अस्ति भाति प्रियं रूपं नाम चेत्यर्थपञ्चकम्[1] ।
आद्यं त्रयं ब्रह्मरूपं मायारूपं ततः परम् ॥ ४४ ॥
अस्तिभातिप्रियत्वं तु जातं कार्यात्मनेच्छया ।
सच्चिदानन्दरूपस्य व्याकृतिर्नामरूपयोः ॥ ४५ ॥
'स सर्वनामा स च सर्वरूप' इति कीर्त्यते ।
'नामरूपे व्याकरवाणी'तीच्छाऽस्याभवत् पुरा ॥४६॥
विभिद्य रूपमेकैकं शब्दजालात् स्ववाचकात् ।
तत्तद्वाचीनि नामानि व्यवहाराय निर्ममे ॥ ४७ ॥
'सर्वाणि रूपाणि विचित्य धीर' इति पौरुषम् ।
सूक्तं श्रुत्यन्तराण्येवं तत्कौर्मे चोपबृंहितम् ॥ ४८ ॥
सर्वेषां तदधीनत्वात्तत्तच्छब्दा[2]भिधेयता ।
अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभिः ॥ ४९ ॥
[3]अनामरूपता तस्यालौकिकत्वाय वर्णिता ।
माहात्म्यबोधनायैव, लौकिकोऽस्ति घटो यथा ॥५०॥
रूपं नियतमेवास्य तत्तिरोभावशालि च ।
द्वित्राण्येव च नामानि, न तथास्[4]येति निश्चयः ॥ ५१ ॥

---

१—सिद्धान्ते तु पञ्चाऽपि कार्यकारणयोरंशपञ्चकम् । २—प्रथमतः सर्वेषां ( पदार्थानां—तद्व्यवहाराणां वा ) भगवत्कृतव्याकरणाधीनत्वात् घटपटादिशब्दवाच्यता जाता । तदर्वाचीने तु काले यथाबुद्धि व्यवहर्तृभिरेव तत्तन्नामनियमनं कृतमित्यर्थः । यथा 'रेल' इति । ३—ननु ब्रह्म तु अरूपनामि श्रूयते कथमिवोच्यते तस्यैव सर्वाणि नामानीति तत्राह—अनामरूपतेति । ४—ब्रह्मणः ।

व्याकृतिः सृष्टिकालेऽतः पूर्वमव्याकृतिस्तयोः ।
द्वयोर्ब्रह्मैकनिष्ठत्वं बृहदारण्यके स्फुटम् ॥ ५२ ॥
'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां
व्याक्रियते असौ नामाऽयमिदꣲरूपोऽयमिति ।
ऍतन्मते सुनिष्पन्नं सांकर्यं कार्यकारणे ।
तन्निवृत्त्यर्थमाचार्यैः पदं शुद्धं विशेषितम् ॥ ५३ ॥
शुद्धाद्वैतपदे ज्ञेयः समासः कर्मधारयः ।
अद्वैतं शुद्धयोः प्राहुः षष्ठीतत्पुरुषं बुधाः ॥ ५४ ॥
मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः ।
कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम् ॥ ५५ ॥
इति श्लोकत्रयेणात्राद्वैते शुद्धविशेषणम् ।
गोस्वामिगिरिधरैर्मार्तण्डे[2] विवृतं स्वके ॥ ५६ ॥
अद्वैते शुद्धता श्रीमद्वल्लभाचार्यरूपिते ।
मतान्तरेषु सर्वत्र दृश्यते द्वैतमेव यत् ॥ ५७ ॥
दुर्मतनिरासकृतिनामाचार्य्याणां हुताशनाख्यानाम् ।
अन्तःकरणविभूषणसुरपतिरत्नं[3] तमः[4] स[5] मे हन्तु ॥५८॥

इति श्रीमद्वल्लभाचर्य्यमतानुवर्त्तिश्रीव्रजवल्लभचरणानुचरपञ्चनदी-घनश्यामभट्टात्मज श्रीगोवर्द्धनशीघ्रकविविरचिते वेदान्तचिंतामणौ जीवान्तर्यामिस्वरूपविवेकपूर्वकशुद्धाद्वैतार्थनिरूपणं नामाष्टमं प्रकरणम् ॥ ८ ॥

---

१—शांकरमते । २—शुद्धाद्वैतमार्तण्ड इति ग्रन्थे । ३—नीलमणिः । ४—अज्ञानान्धकारम् । ५—श्रीकृष्णः ।

ब्रह्मसाकारत्वविवेको नाम नवमं प्रकरणम्[1] ।

स्वाभिन्नाऽप्राकृतैर्धर्मैः श्रितं सर्वैर्विरोधिभिः ।
शक्तीभिस्तादृशीभिस्तं वन्दे निर्दोषमद्वयम् ॥ १ ॥

अप्राकृताखिलाकारः श्रुतिभिः प्रतिपाद्यते ।
माहात्म्याय[3] स्फुटं भक्त्यै प्राकृतं तु निषिध्यते ॥ २ ॥

यत्पाञ्चभौतिकं तस्येच्छया षड्भावदर्शनम्[4] ।
मितं[5] नियतकार्यं च तत् प्राकृतमुदाहृतम् ॥ ३ ॥

यथा देहोऽस्मदादीनां पञ्चभूतेभ्य उत्थितः ।
अस्मिञ्जायत इत्याद्या दृष्टा विकृतयोऽपि षट् ॥ ४ ॥

मलिनोऽन्यनियम्यश्च मितः सप्तवितस्तिभिः ।
श्रवसा श्रूयतेमात्रं दृश्यतेमात्रमीक्षया ॥ ५ ॥

---

१—अस्मिन् प्रकरणे परब्रह्मणः साकारत्वनिरूपणम् । निराकारत्वोक्तिस्तु तन्माहात्म्यबोधायैवेति कथ्यते । आनन्द एव ब्रह्मणि रूपस्थानीयः । अत एवोक्तं सूत्रकर्त्रा 'अरूपवदेव हि तत्प्रधानत्वात्' इति । रूपवद्भिन्नं तद्ब्रह्मेति तत्रार्थः । अरूपि ब्रह्मेति विवक्षितं चे'दरूपमेव हि' इत्यादि सूत्रं कुर्यात् । न तु तथा । तस्मात्साकारमेव परंब्रह्म सूत्रकर्तुरभिमतम् । गीतायां तु सर्वत्रैव प्रायो ब्रह्मणः साकारव्यापकत्वमभिहितम् । इदं सर्वं हृदिकृत्वाऽऽहभगवती श्रुतिः—'आनन्दं ब्रह्मणो विद्वान्' 'आनन्दं ब्रह्मणो रूप'मित्यादि । २—स्वाभिन्नाभिरप्राकृतीभिः । ३—माहात्म्यज्ञानपूर्वकसुदृढस्नेहस्यैव भक्तित्वात् । ४—जायतेऽस्ति वर्धतेऽपक्षीयते विपरिणमते नश्यतीत्येवम् । ५—परिच्छिन्नम् ।

नित्या धर्मा निजाऽभिन्नाः सर्वे सर्वत्र तस्य तु ।
सर्वकामः सर्वरस इति छान्दोग्यरूपणात् ॥ ६ ॥

विश्वतश्चक्षुरुत विश्वतो मुखो
विश्वतो बाहुरुत विश्वतस्पात् ।
सम्बाहुभ्यां धमति सम्पतत्रै-
र्द्यावाभूमी जनयन् देव एकः ॥ ७ ॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
सर्वतः पाणिपादान्तमिति श्रुत्यादयोऽवदन् ॥ ८ ॥
सर्वत्र सर्वेंद्रियाणां तस्य तत्कार्यमीर्य्यते ।
सर्वज्ञस्याखिलं ज्ञानं सर्वकर्तुः क्रियाखिलाः ॥ ९ ॥
न पांचभौतिकं तानि सर्गार्थं स स्वतो व्यधात् ।
अजत्वादमृतत्वाच्चाविकारित्वान्न विक्रियाः ॥ १० ॥

त्वं ब्रह्म पूर्णममृतं विगुणं विशोक-
मानन्दमात्रमविकारमनन्यदन्यत् ।
विश्वस्य हेतुरुदयस्थितिसंयमाना-
मात्मेश्वरश्च तदपेक्षतयाऽनपेक्षः ॥ ११ ॥

---

१—आब्रह्मतृणस्तम्बान्तानां चक्षूंषि अस्येति विश्वतश्चक्षुः । अन्यदप्युन्नेयम् । उत अपि । सर्वेन्द्रियोपलक्षणमेतत् । एवं विघोषः द्यावाभूमी जनयन् । पतनसाधनैः पादैर्वा । संधमति संयोजयतीत्यर्थः । २—दर्शनादिकम् । ३—चाक्षुषादि । ४—गमनादानादिका । ५—इन्द्रियादि इति शेषः । ६—स्वरूपतस्तानि इन्द्रियादीनि व्यधादित्यर्थः ।

अत एव न मालिन्यमैश्वर्यान्न नियम्यता ।
व्याप्तेः [1]परिमितिर्नैवमेतदप्राकृताकृति ॥ १२ ॥

सर्वाकाराश्रयत्वं च श्रुतयोऽवर्णयन् '[2]समः ।
मशकेन समो नागेने'त्याद्यास्तद्विभुत्वतः ॥ १३ ॥

प्राकृतं परिमाणादि पांचभौतिकतादिकम् ।
तस्याऽ'स्थूलमनणवा'दिश्रुतिभिः प्रतिषिध्यते ॥ १४ ॥

क्रियासु फलसन्देहो देहेऽभिमतिरज्ञता ।
[3]ऊर्मयो लोकनिष्ठानां दोषा इत्यादयो मताः ॥ १५ ॥

'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' ।
इत्यादिश्रुतयः सर्वं न्यषेधंस्[4]तत् सदूषणम् ॥ १६ ॥

तस्य प्राकृतशून्यत्वं तथा भागवतादिषु ।
'गृह्य[5]माणैस्त्वमग्राह्यो विकारैः प्राकृतैर्गुणैः' ॥ १७ ॥

---

१—लोकवत्परिच्छेदः । २—'समो मशकेन समो नागेन' बृहदारण्यकश्रुतिः । साम्यं च तत्तन्निष्ठाकारवत्त्वेन । ३—कामक्रोधादयः । ४—ब्रह्मणि क्रियादिकम् । ५—अन्यत्र त्वयि वा दृश्यमानैर्विकारैः प्राकृतैर्गुणैश्च त्वमग्राह्योसीत्यर्थः । स्वबुद्ध्या दृश्यन्ते तथापि लौकिका देहेन्द्रियादयो गुणास्त्वयि न सन्तीति भावः । किंवा लोके ये दृश्यन्तेऽतएव प्राकृतास्तैर्गुणैस्त्वं ग्रहीतुं न शक्यसे । तेन श्रुत्युक्तैरप्राकृतैस्त्वद्गुणैस्तु त्वं ग्राह्य एवेत्यर्थः । ( श्रीभा. १०-१० )

'अपाणिपादो जवनो[1] ग्रहीता
　पश्यत्यचक्षुः स शृणोत्यकर्णः ।
'स वेत्ति वेद्यं न च तस्य वेत्ता
　तमाहुरग्र्यं पुरुषं महान्तम्' ॥ १८ ॥

पाणिपादनिषेधेऽपि गमनग्रहणोक्तितः ।
अस्मदादिसमं न्यूनं प्राकृतं प्रतिषिध्य तत्[2] ॥ १९ ॥
विधीयन्ते श्रुतौ सर्वाः सर्वशक्तेः क्रिया ध्रुवाः ।
सर्वत्राबाधितं ज्ञानं चैवं सर्वविदोऽखिलम् ॥ २० ॥

निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो
　निश्चेतनात्मकशरीरगुणैश्च हीनः ।
आनन्दमात्रकरपादमुखोदरादिः
　सर्वत्र च त्रिविध[3]भेदविवर्जितात्मा ॥२१॥

नियताकारकार्यत्वान्योन्य[4]बाधक्षयादयः ।
दोषा गुणेषु देहेषु प्राकृतेषु तदिच्छया[5] ॥ २२ ॥
आनन्दमात्राकारः स निर्दूषणगुणाश्रयः ।
निर्दोषविग्रहः स्यान्निश्चेतना प्रकृतिर्जडा ॥ २३ ॥

---

१—गन्ता । ( श्वेताश्वतरादौ ) । २—पाण्यादिकम् । ३—पञ्चरात्रस्थं वचनम् । सजातीयविजातीयस्वगतभेदरहित आत्मा स्वरूपं यस्य । ४—नियते आकारकार्ये यस्य तद्भावः स च अन्योन्यबाधश्च क्षयश्च ते । ते आदिर्येषां ते तदादयः । ५—'बहुस्या'मिति भगवदिच्छया ।

न प्राकृता गुणास्तस्य न शरीरें[1]द्रियादिकम् ।
इत्युक्तं भगव[2]च्छास्त्रे याज्ञवल्क्यस्मृतावपि ॥ २४ ॥
'अथवा परमात्मानं परमानन्दविग्रहम् ।
इत्यानन्दमयाकारः सर्वत्राप्राकृताखिलः ॥ २५ ॥
निषिध्य प्राकृतं [3]तत्र विधत्तेऽप्राकृतं श्रुतिः ।
सार्वत्रिकत्वकथनात्तस्या[4]प्राकृतता स्फुटा ॥ २६ ॥
सामान्योक्तेर्निषेधेषु लोक[5]सिद्धांशसेधनम् ।
निषिध्य धर्मान् [6]सर्वत्र प्रायो धर्मान्हि वक्ति सा[7]॥२७॥
नन्वानन्दमयं ब्रह्माप्राकृतं प्राकृतं जगत् ।
निरानन्दं कथं ब्रह्मकार्यं[8] तद्रूपमद्वयम् ॥ २८ ॥
इति चेदुक्तमेवैतद्बहुत्वायाऽखिलं कृतम् ।
आनन्दांशोऽखिला धर्मास्ते तिरोभाविता इह ॥२९॥
ब्रह्मधर्मतिरोभावादन्योन्याभावदर्शनात् ।
आविर्भावतिरोभावाभ्यामिदं दृश्यदूषणम् ॥ ३० ॥

---

१–एतदपि न प्राकृतमित्यर्थः । २–'निर्दोषपूर्णे'ति पञ्चरात्रवचने । ३–'अपाणिपादो' इत्यादिश्रुतौ । ४–भगवतश्चक्षुरादेः । ५–लोकतुल्यावयवकरणादिनिषेधः । युक्तं चैतत्–प्रतीतमेव निषेद्धुं शक्यते । नाऽप्रतीतम् । नहि 'शशविषाणो नास्तीति केनाप्युच्यमानं प्रामाणिकं भवति । तस्य अवस्तुत्वात् । न च श्रुत्युक्तं निषेद्धुं शक्यते प्रमाणान्तरेण श्रुत्यैव वा । सर्वप्रमाणबलिष्ठत्वात् । तद्भागस्याप्रामाणिकत्वापातात् । तस्माद्भगवति प्राकृतधर्माणामेव निषेधः । ६–उपनिषत्सु । ७–श्रुतिः । ८–एतद्धेतुभ्यो दृश्ये जगति दूषणं भेद इव ।

रागमात्रं घटे मृत्स्ना सर्ववर्णा विलक्षणा ।
दृश्यो न वास्तवो भेदस्तथात्राप्यवधार्यताम् ॥ ३१ ॥
जगत्तु ब्रह्मणो भिन्नं न ब्रह्म जगतः पृथक् ।
सृष्टिकालेऽपि हि घटो मृदो भिन्नो न मृद्घटात् ॥३२॥
करस्त्ववयवत्वेन शरीराद्भिद्यतें[1]ऽशकः ।
शरीरं न कराद्भिन्नं तस्यावयवितांऽशिता ॥ ३३ ॥
कार्याणि भिन्नभिन्नानि तथात्वा[2]त्तस्य वीक्षया[3] ।
प्राकृतानि विबुद्ध्यन्तां यथासामान्यदर्शनम्[4] ॥ ३४ ॥
सर्वात्मकमनुस्यूतं सर्वत्र ब्रह्म कारणम् ।
सर्वधर्माश्रयत्वेनातथात्वा[5]त्तदलौकिकम् ॥ ३५ ॥
उक्तवाक्ये[6]ऽप्यतो रूपं निरूप्याऽशंक्य भिन्नताम् ।
सर्वत्र च स्वगतभेदविवर्जिततोच्यते ॥ ३६ ॥
व्याप्तेर्दर्श[7]मवाक्ये[8]ऽपि गुणानां गृह्यमाणता[9] ।
निरूपयन्ति श्रुतयस्तस्मादुक्तं[10]व्यवस्थया ॥ ३७ ॥

---

१—हेतुगर्भं विशेषणम् । अंशक इति हेतोः । २—तिरोहितचिदानन्दत्वात् । ३ 'बहुस्या'मितीच्छया । ४—सामान्यानां दर्शनमनतिक्रम्य । सामान्यजना एव जगत्प्राकृतं पश्यन्ति विशेषदर्शिनस्तु ब्रह्मवेत्तारस्तदिदं ब्रह्मात्मकमित्यर्थः । ५—प्राकृतभिन्नत्वात् । ६—'निर्दोषे'ति पञ्चरात्रवाक्ये । ७—इदं पदं पूर्वस्मिञ्श्लोकेऽन्वेति । ८—'गृह्यमाणैस्त्वमग्राह्य' इत्यस्मिन् । ९ गुणानामेव गृह्यमाणतोच्यते न तु गुणैर्हेतुभिर्ब्रह्मणो गृह्यमाणता । किंवा गुणैः कर्तृभिरपि ब्रह्मणो गृह्यमाणता नोच्यते । गुणा एव ब्रह्म गृहीतुं न शक्नुवन्ति कथं पुनरेवंविधैस्तैर्जनो ब्रह्म गृहीतुं शक्नुयादित्यर्थः । १०—तस्मात् प्राकृताप्राकृतगुणव्यवस्थया सविशेषनिर्विशेषोभय-

अत्राहुः शंकराचार्य्या निराकारं परं भवेत् ।
गुणक्रियाविशेषाणामत्यन्ताभाववन्मतम् ॥ ३८ ॥
तन्मायोपहितं सत् स्यादीश्वरः शबलाभिधः ।
मायासम्बन्धतः कर्त्ता भोक्ताऽस्य श्रुतिभिः कृतः॥३९॥
तदुपाधिगतं धर्मांद्यत्राध्यारोपयन्ति ताः ।
वस्तुतोऽपवदन्त्येता निर्विशेषे निषेधिकाः ॥ ४० ॥
[1]अध्यारोपापवादाभ्यां श्रुत्योः स्यात् संगतिर्द्वयोः ।
लोकप्रदर्शनायेन्दोर्यथा शाखाऽपि दर्श्यते ॥ ४१ ॥
[2]ज्ञानार्थचित्तशुद्ध्यर्थोपास्तये प्रथमं तथा ।
निरूप्यते सधर्मत्वं जाते ज्ञाने निषिध्यते ॥ ४२ ॥
इति चेच्छ्रूयतां माया सादिः साऽनादिरेव वा ।
आ[3]द्ये कर्त्ता तु को ब्रह्मातिरिक्ताभावतः परम्[4] ॥४३॥
कर्त्तृत्वं निर्विशेषस्य पुनः प्राप्तं द्वितीयके[5] ।
द्वैताप[6]त्तिः स[7]देवेतिप्रभृतिश्रुतिबाधनम् ॥ ४४ ॥

---

वादिन्यः श्रुतयो ब्रह्म निरूपयन्तीत्यर्थः । १—उपासनासिद्ध्यर्थमन्यत्र दृष्टानां धर्माणां ब्रह्मण्यारोपोऽधिकत्वाय (माहात्म्याय) । वस्तुतस्तु उपासनया चित्तशुद्ध्यनन्तरं, ब्रह्मणो निर्धर्मकत्वात्तान्धर्मान्निषेधन्त्येवेत्यर्थः । २—निर्धर्मकात्मज्ञानार्थं या चित्तशुद्धिस्तस्यै च या उपासना तस्यै इत्यर्थः । ३—सादित्वपक्षे । ४—परं मुख्यमेव ब्रह्म कर्तृ स्यादित्यर्थः । ५—अनादिर्मायेति पक्ष इत्यर्थः । ६—मायाऽनादिरिति पक्षे तु सा च तच्चेति द्वैतमित्यर्थः । ७—'सदेव सौम्येदमग्र आसीत्' इत्यादिश्रुतिविरोध इत्यर्थः ।

ब्रह्माप्यनाद्यनादिः सोपहितस्याऽप्यनादिता ।
सर्गोऽविरतमेव स्यान्न जातु प्रलयो भवेत् ॥ ४५ ॥

नित्यबद्धं भवेद्ब्रह्म मुक्तिस्तन्नाशने यदि ।
श्रूयेत क्वापि तस्यापि जीववन्मुक्तिसाधनम् ॥ ४६ ॥

व्यासाचार्यैः प्रतिज्ञाय निर्गुणस्य विचारणम् ।
'अथातो ब्रह्मजिज्ञासे'त्यत्रैतस्यैव लक्षणम् ॥ ४७ ॥

'जन्माद्यस्य यतः शास्त्रयोनित्वा'दिति कथ्यते ।
प्रतिज्ञोपक्रमौ[1] भग्नौ स्फुटं व्यासस्य ते मते ॥ ४८ ॥

निषेधत्येव[2] कर्तृत्वं प्रकृत्युपहितस्य तु ।
गौणश्चेन्नात्मशब्दादित्यादिना सूत्रकृत् स्वयम् ॥ ४९॥

न 'सोऽकामयते'त्यादिरूपिताः कामनादयः ।
सम्भवन्ति[3] जडाया निर्द्धर्मत्वाद्ब्रह्मणो न ते ॥ ५० ॥

तस्योपाधिवशात् तत्त्वे[4] निर्विशेषविकल्पताम् ।
ब्रह्मणो बाधते या सा नश्येत् तज्ज्ञानतः कथम् ॥५१॥

---

१—प्रथमसूत्रे निर्गुणस्य प्रतिज्ञाऽपरस्मिन्नेव च सगुणस्याप्रतिज्ञातस्य लक्षणमुक्तमिति प्रतिज्ञाभङ्गः । अतएवोपक्रमस्य पूर्वप्रक्रान्तस्य निर्गुणसम्बन्धिनो भङ्गश्च । २—ननु मायोपहितं गौणमेव ब्रह्म जगत्कर्तृ भवतु तत्राह—निषेधत्येवेति । ३—उपाधिभूताया मायाया न संभवन्तीत्यन्वयः । ४—कामादिमत्त्वे । ब्रह्म स्वतो न कर्तृ किन्तु मायावशत इत्युक्ते तु निर्विशेषत्वहन्त्री सा निर्विशेषज्ञानतः कथं नश्येदित्युच्यतामित्यर्थः ।

न्यायात् 'प्रक्षालनाद्धीति' ह्यध्यारोपापवादतः ।
धर्माणां लोकसिद्धानामपवादोऽस्तु केवलम् ॥ ५२ ॥
मायागुणोपासनाच्चेन्मुक्तिः स्याद्धेयता कुतः ।
ज्ञानोद्भवेऽपराद्धं वा किं मायारूपया स्त्रिया ॥ ५३ ॥
इत्यादिदूषणगणैस्तन्मतं श्रुत्यसम्मतम् ।
आचार्यैः प्रभुभिश्चान्यैर्विस्तरेण निराकृतम् ॥ ५४ ॥
तस्माद्रतीच्छया सर्वशक्तिरीश्वर आत्मनः ।
सर्वमाविश्चकारेदमित्येव श्रुतयोऽवदन् ॥ ५५ ॥
श्रुत्योरुभयवादिन्योर्निर्णये प्राह सूत्रकृत् ।
तद्व्यवस्थामिमामेव श्रुतिभिः सैव सिद्ध्यति ॥ ५६ ॥
"[1]प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ।
कर्त्ता भर्त्ता च भोक्ता च निहन्ताऽपि स एव हि ।
'अहं सर्वस्य' 'स इमाँल्लोकानसृजत' इति ॥ ५७ ॥
'सर्वकर्त्ता सर्वभोक्ता भर्त्ता भोक्ता महेश्वरः' ।
'भर्त्ता सन् भ्रियमाणो विभर्त्ती'त्यादिवचोभरैः ॥५८॥
स्वातन्त्र्यं युज्यते कर्त्तुः सृष्टौ स्वातन्त्र्यमीशितुः ।
मायायास्तस्य शक्तित्वात् करणत्वं पुराणतः ॥ ५९ ॥
धर्माविर्भावतः स्वस्याप्राकृतात्मत्वसिद्धये ।
पूर्वं स सेव्यते जाते तादृक्त्वे निश्चिलं पुनः ॥ ६० ॥

---

१–लोके दृश्यमानं गुणवत्त्वं तत्कृतपरिच्छेदं वा श्रुतिर्निषेधति तदनंतरं बहुशो गुणवत्त्वं वदति च । तस्मादप्राकृतगुणवत्त्वं ब्रह्मणः श्रुतिसंमतमिति ज्ञायत इत्यर्थः । ( अ–३ पा–२ सू–२२ )

अजानंस्तस्य माहात्म्यं नैव सेवेत कश्चन ।
इति माहात्म्यबोधाय प्रवृत्ताः श्रुतयोऽखिलाः ॥ ६१ ॥
'दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्र' इति दिव्यस्त्वलौकिकः ॥६२॥
अजन्माऽप्राकृततनुः शुद्धः प्राणीतरोऽमनाः[1] ।
प्राणिभिः प्राकृतैः सेव्योऽशुद्धैर्न्यूनैर्मनोवशैः ॥ ६३ ॥
यस्याऽप्राकृतधर्मा आत्माभिन्नाश्च शक्तयः सर्वाः ।
सर्वांशभेदहीनं लक्ष्मीनं भज मनो भवद्दीनम् ॥ ६४ ॥

इति श्रीमद्वल्लभाचार्यमतवर्तिश्रीव्रजवल्लभचरणानुचरपंचनदीघन-
श्यामभट्टात्मजश्रीगोवर्द्धनशीघ्रकविविरचिते वेदान्तचिन्तामणौ
ब्रह्मसाकारत्वविवेको नाम नवमं प्रकरणम् ॥ ९ ॥

## अथ शक्तिधर्माभेदनिरूपणपूर्वकद्वैतमतनिराकरणं[2] नाम दशमं प्रकरणम्

शुद्धाद्वैतं वस्तुतस्तु नानाभेदं निजेच्छया ।
स्वाभिन्नशक्तिधर्माणं नुमो नानामतस्तुतम् ॥ १ ॥
ब्रह्मैवैकं प्रपञ्चस्य निमित्तं समवायि च ।
पुराणे करणं माया तच्छक्तिर्दंडवन्मता ॥ २ ॥

१–'दिव्य' इत्यादिश्रुतेरर्थं विवृणुते । २–अस्मिन् प्रकरणे शक्तिधर्माऽभेदनिरूपणपूर्वकं वास्तवं द्वैतं निराक्रियते ।

अचिन्त्या विविधा नित्याः स्वाभाविक्योऽस्य शक्तयः ।
ज्ञानक्रियादिभेदेन स्वाभिन्नाः स्ववशा विभोः ॥ ३ ॥

'न तस्य[१] कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च' ॥ ४ ॥

'यः सर्वज्ञः सर्वशक्ति'रित्यादिश्रुतिभिः श्रुताः ।
तासु मायाप्यघटितघटनायां पटीयसी ॥ ५ ॥

श्रियो[२] पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया ।
विद्ययाऽविद्यया शक्त्या मायया च निषेवितम् ॥६॥

इति भागवतोक्तासु मुख्यासु द्वादशस्वियम् ।
गणिता, करणत्वेन पुराणे परिवर्णिता ॥ ७ ॥

'स[३] एवेदं' ससर्जाग्रे भगवानात्ममायया ।
सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः' ॥ ८ ॥

सामर्थ्यं सर्वभवने तस्य मायेति कथ्यते ।
शक्तित्वात्तदभिन्ना सा विचित्रपरिणामकृत् ॥ ९ ॥

क्वचित् संमोहिका मायाऽविद्यैव व्यपदिश्यते ।
बहवोऽर्था हि मायाया गीता[४]भाष्ये प्रदर्शिताः ॥ १०॥

---

१—श्वेताश्वतरोपनिषत् । २—श्रीभा. १० मेऽक्रूरस्तुतौ । ३—श्रीभा. १ मे । ४—तत्वदीपिकाख्ये । 'अजोपि सन्नव्ययात्मे' त्यस्य व्याख्याने ।

मायाशब्दः क्वचिच्छास्त्रे हरिसामर्थ्यवाचकः ।
क्वाप्यविद्या मृषावाची कृपाकपटवित्तवाक् ॥ ११ ॥
शक्तिशक्तिमतोर्भेदो वस्तुबोधाय केवलम् ।
अभेदो वस्तुतो नाक्ष्णो दृष्टिशक्तिः पृथग्भवेत् ॥१२॥
न धर्मधर्मिणोर्द्वैतमप्यस्याप्राकृतस्य तु ।
'प्रकाशा[1]श्रयवद्वा तेजस्त्वा'दिति हि सूत्रितम् ॥१३॥
तेजःप्रकाशयोर्भेदो न तेजस्त्वाद्यथा, तथा ।
ब्रह्मणः शक्तिधर्माणां ब्रह्मत्वेन भिदा न हि ॥ १४ ॥
न भूमिर्गन्धतो भिन्ना न गन्धो भूमितः पृथक् ।
तद्वस्तु तादृगेवेति न द्वैतं धर्मधर्मिणोः ॥ १५ ॥
अस्मिँस्त्वलौकिकेऽचिन्त्येऽद्वये भेदो न सर्वथा ।
सुविस्तृतमिदं भाष्ये श्रीविद्वन्मण्डने तथा ॥ १६ ॥
माध्वाचार्या इह प्राहुर्जगत्कर्त्ता कुलालवत् ।
भिन्नो निमित्तमेवेशो विकारात्समवायिनः ॥ १७ ॥
प्रकृतिः स्यादुपादानं त[2]त्तन्त्राऽस्य जडस्य[3] तु ।
'प्रकृतिर्ह्य[4]स्योपादानमिति' भागवतोक्तितः ॥ १८ ॥
ब्रह्मणो जडजीवानां द्वैतमेवाऽस्ति वास्तवम् ।
जीवब्रह्मभिदां वक्ति 'द्वा[5] सुपर्णा' श्रुतिर्यतः ॥ १९ ॥

---

१—प्रकाशस्तदाश्रयश्च सूर्यस्तदुभयं यथा तेजःपदार्थत्वादेकः पदार्थस्तथा धर्मधर्मिणोरभेद इत्यर्थः । २—भगवत्परतन्त्रा । ३—कारणसाधर्म्याज्जडत्वम् । ४—जगतः । ५—मुण्डके पैङ्गिरहस्यब्राह्मणे ।

इति चेच्छ्रूयतामुक्त्वा सूत्रकृद्ब्रह्म कारणम् ।
'जन्माद्यस्येति' सूत्रेण केवलं न निमित्तता ॥ २० ॥

समवायित्वमप्यस्येत्याह "तत्तु समन्वयात्" ।
रत्यभावो न युज्येत नैव रेमे श्रुतीरितः ॥ २१ ॥

अस्यैवाग्रे सहैतावानासेति समवायिता ।
पठ्यते समवायित्वं तैत्तिरीयादिषु स्फुटम् ॥ २२ ॥

'असद्वा इदमग्र आसीत् । ततो वै सदजायत' ।
'तदात्मानꣳस्वयमकुरुत । तस्मात्तत्सुकृतमिति ।
आत्मानमित्युपादानं[1] निमित्तमकरोदिति ।
अभावोऽन्यनिमित्तस्य स्वयमित्यभिधीयते ॥ २३ ॥

'ऐतदात्म्यमिदं[2] सर्वं । 'आत्मैवेदं सर्वम्' ।
सर्वं खल्विदं ब्रह्म' । 'पुरुष[3] एवेदं सर्वं' ।
'यद्भूतं यच्च भाव्यम् ।
श्रुतिभिः स्मृतिभिः प्रोक्ता जगतो ब्रह्मरूपता ।
बाध्यते, प्रकृतिस्त्वाविरासास्यांशः सदात्मकः ॥ २४ ॥

अतस्त्वदुक्तवाक्येऽपि[4] 'ब्रह्म तत्त्रितयं[5] त्वहम्' ।
प्रकृतेः पुरुषस्यापि कालस्य हरिरूपता ॥ २५ ॥

---

१—'तदात्मान इत्यादिश्रुतेरर्थः । २—छान्दोग्ये । ३—पुरुषसूक्ते ।
४—'प्रकृतिर्ह्यस्योपादानमितिवाक्ये । ५—तदुत्तरार्द्धे प्रकृतिपुरुषकालाः।

'यत्र येने'ति[1] पद्योक्ताऽग्रेप्येतद्दर्शयिष्यते ।
सर्गान्तरे[2] तथात्वेऽपि निदानं तु तदेव हि ॥ २६ ॥

अत्रोर्णनाभिदृष्टान्तो[3]ऽप्यनेकत्र निदर्श्यते ।
समवायेऽप्यविकृतिः पूर्वमेव प्रदर्शिता ॥ २७ ॥

सर्वत्राद्वैतमेवोच्चैर्वदन्ति श्रुतयोऽखिलाः ।
पुमान् कथञ्चिदपि हि द्वैतज्ञानेऽपि दुष्यति ॥ २८॥

'द्वा[4] सुपर्णा' श्रुतौ सृष्टौ जीवान्तर्यामिणोर्भिदा ।
वृक्षाश्रयत्वसहजत्वादि नैव परस्य यत् ॥ २९ ॥

'तत्त्वमस्या'दिवाक्यानि तदभेदं वदन्ति च ।
अभेदोंऽशांशिभावेन ब्रह्मस्वांशः स[5] यन्मतः ॥ ३० ॥

---

१—यत्र येन यतो यस्येति श्रीभागवतवचनव्याख्याने निबन्धे । २—'कदाचित्पुरुषद्वारे'तिनिबन्धोक्तेः प्रकृतेः कारणत्वेऽपि सर्वकारणकारणं तु ब्रह्मैवेति पद्यार्धार्थः । ३—अभिन्ननिमित्तोपादाने । ४—ननु 'द्वा सुपर्णे'ति श्रुतौ द्वैतं श्रूयते कथं पुनरद्वैतं साध्यत इत्याशंक्य श्लोकैकेनोत्तरयति । अस्यां श्रुतौ सृष्टावेव, किंच जीवात्मनोरेव, द्वैतमुच्यते न तु परस्य भेदः कथ्यते । यत् (हेतोः) वृक्षाश्रयत्वं (देहे स्थितत्वं) सहजत्वादि च विशेषणं दीयते । तत्तु सृष्टौ जीवान्तर्यामिणोरेव युज्यते न परस्येत्यर्थः । ५—जीवः ।

स्वाशत्व'मंशो[1] नाना व्यपदेशा'दित्युपक्रमात्[2] ।
व्यासेन बोधितं सूत्रे, तथा स्मृतिपुराणयोः ॥ ३१ ॥

'ममैवांशो[3] जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानींद्रियाणि प्रकृतिस्थानि कर्षति' ॥ ३२ ॥

'स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं[4]
तव पुरुषं वदन्त्यखिलशक्तिधृतोंऽशकृतम् ॥
इति नृगतिं विविच्य कवयो निगमावपनं
भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः ३३

भेदाभेदं ब्रुवाते आचार्यौ निम्बार्कभास्करौ ।
निम्बार्काणां मते भेदो वास्तवो माध्ववन्मतः ॥ ३४॥

पुत्रादयो विभिन्नांशाः स्वांशाः करपदादयः ।
विभिन्नांशा इमे जीवा इति भेदो विनिश्चितः ॥ ३५॥

---

१–जीवो ब्रह्मणोंऽश एव नानात्वेन ( क्वचिदीशितव्येन क्वचिच्चेतनत्वेन क्वचिदणुत्वेन व्यापकत्वेनेति ) व्यपदेशात् । श्रुतौ श्रवणात् । नहि ब्रह्मतदंशातिरिक्तस्याऽन्यस्य विरुद्धधर्माश्रयत्वं युक्तमिति ( २–३–४३ ) । २–उपक्रमं विधायेति ल्यब्लोपे पंचमी । ३–गीतोप–१५–७ । ४–देहादिरूपेषु अमीषु ( स्थितमिति यावत् ) बाह्याभ्यन्तरं स्वरूपेण निर्दोषं पुरुषं जीवं अखिलशक्तिधृतस्तव अंशकृतं वदन्ति । निरवयवत्वबाधकपरिहाराय कृतमित्युक्तम् । इति एवंप्रकारेण जीवस्य मूलस्थानं विचार्य कवयो विश्वसिताः सन्तो निगमावपनं कर्मसमर्पणस्थानं अतएवाऽभयं भवतश्चरणारविन्दं भुव्युपासत इत्यर्थः ।

एषां चित्त्वेन साधर्म्यादभेदोऽपि निरूप्यते ।
मुखस्याह्लादकत्वेन सादृश्याच्चन्द्रता यथा ॥ ३६ ॥
अंशत्वं माध्ववत्तेषां भेदाभेदौ व्यवस्थया ।
सिद्धान्तवदणुत्वादि तत्राप्यवहितः शृणु ॥ ३७ ॥
स्वांशत्वमेव जीवानां 'ममैवे'त्येवकारतः ।
हेतुः संगच्छते नाना व्यपदेशो न ते मते ॥ ३८ ॥
'पादोऽस्य विश्वाभूतानी'ति पादत्वेन चांशताम् ।
'मन्त्रवर्णा'[1]दिति व्यासः स्वांशतैव तथा सति ॥३९॥
वह्निस्वांशो विस्फुलिंगोऽतो दृष्टान्तीकृतः श्रुतौ ।
अस्यावयवभूतैस्तु व्याप्तं कृत्स्नमिदं जगत् ॥ ४० ॥
इत्यादिश्रुतिभिर्जीवाः स्वांशा अवयवोक्तितः ।
क्वाप्यश्रुतं विभिन्नांशत्वं सर्वत्राभिदाऽनयोः[2] ॥ ४१ ॥

[3]यत्त्वाह माध्वो वनमालिदासो
राश्येकदेशोंऽश इहास्तु चन्द्रात् ।
यथा शतांशो गुरुमण्डलं स्या-
दित्थं मयाऽन्यत्र तदप्यदूषि ॥ ४२ ॥

---

१—'पादोऽस्य विश्वाभूतानि' इति मन्त्रवर्णे जीवस्य भगवदंशत्वं वर्णितमिति हेतोः। २—जीवब्रह्मणोः । ३—यत्तु माध्वो वनमालिदास, 'इह (श्रुतिसूत्रादौ) राशेः ( समूहस्य ) एकदेशः अंशः भवतु यथा चन्द्रात् शतांशः गुरुमण्डलमित्युच्यते तथा' इत्याह, तदपि मया-ऽन्यत्र ( शुद्धाद्वैतचन्द्रोदयादौ ) इत्थं अदूषि ।

'यथा सौम्येति' मृत्पिण्डदृष्टान्तोऽत्र[१] पराहतः ।
प्रतिज्ञैकविज्ञानात्[२] सर्वविज्ञानमित्यपि ॥ ४३ ॥
अभेद एव श्रुतिषु तत्त्वमस्यादिषूदितः ।
बन्धे द्वैतभ्रमो, मोक्षे तन्निवृत्तिर्निगद्यते[३] ॥ ४४॥
यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती'त्याद्युक्त्वा 'यत्र त्वस्य सर्वमात्मैवाऽभूत् तत्केन कं पश्ये'दित्यादि । तथा 'योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मि न स वेद यथा पशुः' ॥ ४५ ॥
निन्दन्ति श्रुतयो द्वैतं, दोषो ज्ञाने तथा महान् ।
श्रौतं ब्रह्मप्रपञ्चैक्यं घटते न मते च ते ॥ ४६ ॥

यस्मिन् यतो यर्हि च येन यस्य
यस्माद्यथा यदुत यस्त्वपरः परो वा ।
भावः करोति विकरोति पृथक्स्वभावः
संचोदितस्तदखिलं भवतः स्वरूपम् ॥ ४७ ॥

---

१—भेदे, भेदाऽभेदे च । २—'अपि वा तमादेशमप्राक्ष्यो येनाऽश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति छान्दोग्ये । ३—निगदेनोच्यते । ४—उत् अप्यर्थः । अरं—अल्पमपि अन्तरं भेदम् । तैत्तिरीये । ५—यस्त्वपरोऽपकृष्टः पित्रादिर्यश्च पर उत्कृष्टो ब्रह्मादिर्भावः कर्तेति यावत् । यद्यत्करोति, विकरोति रूपान्तरं नयति वा तत्सर्वं

भास्कराणां मते भेद औपाधिक उदीरितः ।
अभेदस्त्वन्ततो, जीवो व्यापको, लिङ्गतोऽणुता ॥४८॥

इहापि व्यापिता जीवतया ब्रह्मतयाऽथवा ।
आद्ये नैयायिके वेशो द्वितीये शाङ्करे तथा ॥ ४९ ॥

पुरा निराकृता व्याप्तिर्द्धीपाधिकृताऽणुता ।
नित्यस्वाभाविकैश्वर्यज्ञानादेर्यदि रोधकः ॥ ५० ॥

घटेतोपाधिरेवान्यो नाऽबाधाऽखिलधर्मिणः ।
अद्वयस्य स्वतन्त्रस्य दूरे तन्मूलिका भिदा ॥ ५१ ॥

'व्रजंस्तिष्ठन् पदैकेन यथैवैकेन गच्छति ।
यथा तृणजलौकैवं देही कर्मगतिं गतः' ॥ ५२ ॥

---

भवतः स्वरूपमेव न पृथक् । कारकादीनां तत्स्वरूपत्वमाह—यस्मिन्नधिकरणे, यतो निमित्तात्, यर्हि यस्मिन्काले, येन करणेन हेतुकर्त्रा, च संचोदितः प्रेरितः । यस्य संबंधि, यस्मादपादानात्, यस्मै संप्रदानाय, यत् ईप्सिततमं कर्म, यथा येन प्रकारेणेति सर्वोऽपि वाच्यवाचकरूपः पदार्थो भगवत्स्वरूपमेवेत्यर्थः । ( श्रीभा. ७–९ )

१–उपाधिनाशे । २–अणुत्वश्रुतिर्लिङ्गदेहाभिप्रायेण न जीवाणुत्वबोधिकेत्यर्थः । ३–प्रवेशः । ४–जीवत्वेन ब्रह्मत्वेन च । ५–यदि अबाधाखिलधर्मणो ब्रह्मणो नित्यस्वाभाविकैश्वर्यज्ञानादे रोधकोन्य उपाधिरेव न घटेत ( तर्हि ) अद्वयस्य स्वतन्त्रस्य ( तस्य ) तन्मूलिकाभिदा तु दूर इति सार्धैकस्यान्वयः । ६– ( श्रीभा० १०–१–४ ) ।

इत्यादिना वक्ति नाना तस्य भागवतं गतीः ।
'अन्यानि संयाति नवानि देही'त्यादिका स्मृतिः[1]॥५३॥
पूर्वत्यागो गतिर्देहान्तरे व्याप्तस्य नोचिता ।
इदं लिङ्गस्य[2] चेद्ब्रूयात् देहः कर्मगतिं गतः ॥ ५४ ॥
अत्र देहीति संघातो देहवान् भिन्न उच्यते ।
त्याज्यप्राप्यत्वकथनात् स्थूलदेहस्य नेह सः ॥ ५५ ॥
इत्यादिश्रुत्यादिमूलैर्मतान्येतानि दूषणैः ।
प्राचामाचारतो वाचामर्वाचामपि सुस्फुटैः ॥ ५६ ॥
समनूद्य पृथङ् माध्वकिरणादिषु विस्तरात् ।
निरस्तानि मया शुद्धाद्वैतचन्द्रोदयादिषु ॥ ५७ ॥
अभेदो वास्तवो ब्रह्मजगतोरैच्छिकी भिदा ।
जीवाः स्वांशाः प्रवेशादि[3]सिद्धान्तः श्रुतिसंमतः ॥५८॥
'सजातीयविजातीयस्वगतद्वैतवर्जितम्' ।
ब्रह्मोक्तं श्रीमदाचार्यैर्द्वैतगन्धोऽपि नास्ति नः ॥ ५९ ॥
तत्र जीवाः सजातीया विजातीया जडा मताः ।
स्वगता अन्तरात्मानो भिन्ना घटशराववत् ॥ ६० ॥
अभिन्ना ब्रह्मणो, मृत्त्वाद्धटादेरभिदा यथा ।
सजातीयादिभेदानां स्वरूपं च यथोदितम्[4] ॥ ६१ ॥

---

१—श्रीगीता । २—लिङ्गदेहस्य गमनं कथयेत्तर्हि 'देह' इति वदेन्न तु तथेत्यर्थः । ३—सैन्धवखिल्यवद्ब्रह्मणि जीवप्रवेशः । आदिशब्दाद्विस्फुलिङ्गवत्तत एव निर्गमः । ४—विद्यारण्यादिभिरिति शेषः ।

वृक्षस्य[1] स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात् सजातीयो विजातीयः शिलादितः ॥६२॥

शुद्धाद्वय[2]नयज[3]यकृद्दयया भयहृद्भवप्रभवभाजाम् ।
कारणमाह यमेकं[4] तमनु[5]त्सेकं[6] भजस्व सविवेकम् ॥ ६३॥

इति श्रीमद्वल्लभाचार्यमतवर्ति श्रीव्रजवल्लभचरणानुचरपंचनदी-
घनश्यामभट्टात्मजश्रीगोवर्द्धनशीघ्रकविविरचिते वेदान्त-
चिन्तामणौ शक्तिधर्माभेदनिरूपणपूर्वकद्वैतमतनि-
राकरणं नाम दशमं प्रकरणम् ॥ १० ॥

## अथ विशिष्टाद्वैतविचा[7]रो नाम एकादशं प्रकरणम् ११

यद्रूपश्चिदचित्सर्गः स्पृष्टः सृष्टौ[8] न तेन यः ।
सर्वत्र सन्नविज्ञा[9]तोऽस्मै नमोऽनुप्रवेशिने ॥ १ ॥

यः सर्वत्रैव संतिष्ठन्नन्तरः संस्पृशेन्न तत् ।
शरीरं तन्न वेदेत्थं योऽनुविश्य प्रकाशते ॥ २ ॥

---

१—पञ्चदशीकारिकेयम् । २—सिद्धान्तः । ३—श्रीमदाचार्या इत्यर्थः । ४—मतान्तरोक्तकारणान्तरव्यावर्तनायैकम् । ५—पुरुषोत्तमम् । ६—क्रियाविशेषणम् । ७—अस्मिन्प्रकरणे प्रसङ्गप्राप्तं श्रीरामानुजमतं समालोच्यते । ८—सृष्टावित्युक्तेः कार्यावस्थायामेव भगवतश्चिदचिच्छरीरत्वं न वास्तवमिति तन्मतस्यैकदेशित्वमपि सूच्यते । ९—ताभ्यां चिदचिच्छरीराभ्यामिति शेषः ।

इत्याहुः श्रीमदाचार्याः शास्त्रार्थे[1] ब्रह्मरूपणे ।
संगृह्य कथ्यतेऽत्रार्थो 'यः पृथिव्या'मिति श्रुतेः ॥ ३ ॥
बृहदारण्यकेऽध्याये पञ्चमे तच्च सप्तमे ।
ब्राह्मणे पठ्यते वाक्यमन्तर्यामिनिरूपके ॥ ४ ॥
'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी[2] शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत इत्यादि ॥
रामानुजा वदन्तीह विशिष्टाद्वैतवादतः ।
श्रुतावस्यां पृथिव्यादिसप्तम्याधाररूपणात् ॥ ५ ॥
अतस्तस्यो[3]च्यते भेदो यथाऽस्ते भूतले घटः ।
इति वाक्ये भूमितलाद्घटभेदः प्रतीयते ॥ ६ ॥
अतः पृथ्व्यादिकं व्याप्यं भिन्नमेवाऽखिलं परात्[4] ।
ब्रह्मणो[5] हि शरीरे द्वे नित्ये चिदचिती मते ॥ ७ ॥

---

१—शास्त्रार्थप्रकरणस्य ब्रह्मनिरूपणप्रस्तावे । २—योभगवान् पृथिव्यां गन्धवद्द्रव्ये तिष्ठन् । आधारत्वे सत्यपि तद्धर्मैर्न सम्बध्यत इत्याह—पृथिव्या अन्तरो भिन्नः । तद्भिन्नस्तु तदभिमानीति ततोऽपि भेदबोधनायाह—ये पृथिवीतदभिमानी न वेद, यदि जानीयान्मुक्तः स्यात् । तदभिमानिधर्मैरपि न संबध्यत इत्यर्थः । यस्य पृथिवी द्रव्यमभिमानी च शरीरं आधारादिलीलासिध्यर्थम् । लीलामाह—यः पृथिवीमुभयरूपां अन्तरः अन्तःस्थापयित्वेत्यर्थः स्वस्वकार्ये प्रवर्तयति । अमृत आनंदरूप इत्यर्थः । ३—पृथिव्यादेः । ४—परमात्मनः । ५—षष्ठयन्तम् ।

सूक्ष्मे कारणरूपे ते याभ्यां स्थूलमभूज्जगत् ।
चिच्छरीरात्तु चित्कार्यमचिच्चाचिच्छरीरतः ॥ ८ ॥
विभागानर्हता नामरूपयोः सूक्ष्मता मता ।
नामरूपव्याकरणं तस्यै[1]व स्थौल्यमुच्यते ॥ ९ ॥
ब्रह्मैवं सूक्ष्मचिदचिद्विशिष्टं कारणं श्रु[2]तेः ।
कार्यं च स्थूलचिदचिद्विशिष्टमिति निर्णयः ॥ १० ॥
विशिष्टाद्वैतम[3]नयोरद्वैतं त[4]द्विशिष्टयोः ।
विशेषणे चिदचिती ब्रह्मणः कारणात्मके ॥ ११ ॥
सूक्ष्मे, स्थूले तु ते कार्यात्मके कार्यविशेषणे ।
जीवस्तु स्थूलचित्स्थूलमचित् पृथ्व्यादिकं मतम् ॥१२॥
अन्तःस्थितो नियन्तेहा[5]ऽनुप्रविष्टो विभागकृत् ।
उक्तश्रुतौ पृथिव्यादेर्जडस्यांतःस्थितः श्रुतः ॥ १३ ॥
जीवस्यापि त[6]था काण्वै'र्यो वि[7]ज्ञान' इतीरणात् ।
'य आत्मनी'ति तत्पाठभेदान्माध्यन्दिने श्रुतम् ॥१४॥
शरीरत्वं च तत्रैव श्रु[8]तं तस्यैतयोर्द्वयोः ।
जीवो जडोऽन्तरात्मेति भोक्तृभोग्यनियामकाः ॥१५॥

---

१–सूक्ष्मस्य कारणरूपस्य । २–'यःपृथिव्या' मित्यादिश्रुतेः । ३–अन्तर्यामिब्रह्मणोः । ४–स्थूलसूक्ष्मचिदचिद्युक्तयोः । ५–इह स्थूलचिदचितोर्मध्ये । ६–अन्तःस्थितो वर्तत इत्यर्थः । ७–बृहदारण्यके काण्वानां पाठः । विज्ञाने चिति जीव इत्यर्थः । ८–माध्यन्दिनबृहदारण्यके । ९–'पृथिव्या'मित्यादिना जडस्य 'य आत्मनी'ति जीवस्य च भगवच्छरीरत्वमुक्तमित्यर्थः ।

क्रमात्त्रयः पदार्थास्तैर्मतास्तत्कारिका[1] यथा ।
"ईश्वरश्चिदचिच्चेति पदार्थत्रितयं, हरिः ।
ईश्वरश्चित इत्युक्तो जीवो, दृश्यमचित् पुनः" ॥ ॥ ६ ॥
द्रव्याद्रव्यप्रभेदान्मितमुभयविधं तद्विदस्तत्त्वमाहु-[2]
र्द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्यमव्यक्तकालौ ।
अन्त्यं प्रत्यक् पराक् च प्रथममुभयथा तत्र जीवेशभेदा-
न्नित्या भूतिर्मतिश्चेत्यपरमिह जडामादिमां केऽचिदाहुः
द्रव्यं नानादशावत्प्रकृतिरिह गुणैः सत्वपूर्वैरुपेता कालो-
ब्दाद्याकृतिः स्यादणुरवगतिमाञ्जीव ईशोऽन्य आत्मा ।
सम्प्रोक्ता नित्यभूतिस्त्रिगुणसमधिका सत्वयुक्ता तथैव
ज्ञातुर्ज्ञेयावभासा मतिरिति कथितं संग्रहाद्द्रव्यलक्ष्म ॥ १८
इत्थं वेङ्कटनाथाद्या विस्तराच्छ्रुतियुक्तिभिः ॥
तत्स्रग्धरासहस्रादौ पदार्थं व्यभजन्त ते ॥ १९ ॥
लये क्रमाज्जीवजडौ शरीरे चित्यचित्यपि ॥
विलीयेते नामरूपाविभागेन प्रवेशतः[3] ॥ २० ॥

---

१—तिस्रो वक्ष्यमाणाः । २—तत्ववेत्तारः प्रमाणैर्द्रव्यमद्रव्यं चेति सिद्धं द्विप्रकारकं तत्वं कथयन्ति । तत्र किंचिद्द्रव्यं जडं किंचिच्चा-ऽजडमिति द्विधाविभक्तम् । तत्राऽपि प्रथमं जडं द्रव्यं, प्रकृतिः काल-श्चेति द्विविधम् । अन्त्यं द्वितीयं अजडं द्रव्यं, प्रत्यक् पराक् चोच्यते । तच्च जीव ईशश्चेति भेदाद्द्विविधं प्रत्यक् । अपरं पराक् द्रव्यं तु नित्याभूतिर्मतिश्च । इह अनयोर्मध्ये भूतिं केचिज्जडामाहुरित्यन्वयः ।
३—नामरूपोच्छेदकात्प्रवेशात् ।

वस्तुतो भिन्नमेवैतद्ब्रह्मणश्चिदचित्सदा[1] ।
स्वरूपतः स्वभावाद्यैः[3], शरीरत्वादभेदवाक्[4] ॥ २१ ॥
सूक्ष्मे चिदचिती ब्रह्म तत्त्वानि त्रीणि कारणे ।
स्थूले ते[5] च तदन्तस्थः कार्ये तत्त्वत्रयं मतम् ॥ २२॥
तत्स्थूलसूक्ष्मचिदचिद्विशिष्टे कार्यकारणे ।
क्रमात्तयोरभेदस्तु विशिष्टाद्वैतमीर्यते ॥ २३ ॥
चिच्छरीरेण चित्कार्यस्याचितोऽचिच्छरीरतः ।
अन्तःस्थेन परस्यैक्यं न त्रयाणां परस्परम् ॥ २४ ॥
[6]अस्मन्मतेऽपि भेदश्चेज्जडजीवान्तरात्मनाम् ।
निबन्धे तन्मतं तत्त्वत्रयं स्यादिति चेन्नहि ॥ २५ ॥
जडो जीवान्तरात्मेति कार्यमेव त्रिधा मतम् ।
कारणं त्वेकमेवेदमद्वैतैकरसं परम् ॥ २६ ॥
स बहुस्यां प्रजायेयेतीच्छामूलः परस्परम् ।
कार्यमात्रत्वतो भेदस्तेषां घटशराववत् ॥ २७ ॥
न नित्यो वास्तवस्त्वेषां भेदः कुड्यकुसूलवत् ।
मृत्त्वेनाभेदवत्तेषामभेदोऽत्रास्ति वास्तवः ॥ २८ ॥

---

१—पञ्चमीयम् । २—सृष्टेः पूर्वोत्तरकालयोरपि नाऽभेद इति भावः । ३—भेदे हेतवः । ४—ब्रह्माभेदोस्तीति श्रुत्यादिवाणी तयोः शरीरत्वाभिप्रायादौपचारिकी । ५—चिदचिती । ६—स्वमतेऽपि त्रयः पदार्था इत्याद्याशङ्क्य 'कार्यमेव त्रिधेति' परश्लोकेन समादधाति । ७—जड० जीवानां कार्यत्वेन परस्परं भेदो न पुनः कारणेन सह । ८—घटादीनाम् । ९—जडादिषु । १०—अनौपचारिकः ।

'सर्वं पुरुष एवेदं' 'नेह नानास्ति किञ्चन' ।
'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' ॥२९॥
द्वैतदृष्टे'र्द्वितीयाद्वै भयं भवति' सर्वथा ।
'[1]आत्मेति तूपगच्छन्ति ग्राहयन्ति च' तद्विदः ॥३०॥

'[2]तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत्तथा ऋषीणां तथा मनुष्याणां तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवꣳ सूर्यश्चेति' ॥

'तदिदमप्येतर्हि य एवं वेदाऽहंब्रह्मास्मीति स इदꣳ सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषाꣳ स भवति अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवꣳ स देवाना' मित्यादि ॥

'ब्रह्मविद्ब्रह्मैव भवती'त्यादिश्रुतिषु स्फुटम् ।
कार्येऽपि भिन्नचिदचिद्वैशिष्ट्यं तेन वारितम् ॥ ३१ ॥
[3]अथ ब्रह्मातिरिक्तस्य कारणत्वं निवारये ।
'एकमेवाद्वितीयं' तद्वेदे ब्रह्मैव कारणम् ॥ ३२ ॥
'नासदासीन्नो सदासी' 'न्नान्यत्किंचिन्मिष'त्तदा ।
स्वभिन्नचिदचित्सत्त्वे 'त्वेकोऽह'मिति बाध्यते ॥३३॥

---

१—ज्ञानिनः परं ब्रह्म आत्मत्वेन प्रत्यक्षीकुर्वन्ति तदनन्तरं तत्प्रविशन्ति च । परांश्चोपदिशन्ति च । २—बृहदारण्यके—पुरुषविधब्राह्मणे । ३—भिन्नप्रक्रमेण । ब्रह्मैव स्वरूपेण सर्वकारणं नतु शरीरवैशिष्ट्येनेत्युच्यत इत्यर्थः ।

'आत्मैवेदमग्र[१] आसीत्पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत् ॥ तत्रैव ॥

ब्रह्म[२] वा इदमग्र आसीत्तदात्मानमेवावैदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत् ॥ तत्रैव ॥

आत्मैवेदमग्र[३] आसीदेक एव सो कामयतेत्यादि ।

सदेवं[४] सौम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म ।

सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत ॥

आत्मा[५] वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत् स ऐक्षत लोकान्नु[६]सृजा इति स इमाँल्लोकानसृजतेति ॥

'तस्माद्वा[७] एतस्मादात्मन आकाशः सम्भूत' इत्यादि ॥ 'सोऽकामयत बहु स्यां प्रजायेयेति' । 'स तपोऽतप्यत' । स तपस्तप्त्वा । इदꣳ सर्वमसृजत । तदात्मानꣳ स्वयमकुरुत । तस्मात्तत्सुकृतमुच्यत इति ।

---

१—बृहदारण्यके. ( बृ. १ अ. ४ ब्रा. ) । २—(बृ. १ अ. ४ ब्रा. १० मं. ) । ३—( बृ. १ अ. ४ ब्रा. ) । ४—छान्दोग्ये श्वेतकेतुविद्यायां (६ अ. २ ख. १ मं. ।) ५—बह्वृचानामैतरेयोपनिषदि १ ख. १ मं. । ६—लोका अम्भःप्रभृतयः पदार्थास्तत्र प्रसिद्धाः । ७—तैत्तिरीयोपनिषत् ।

स्वयं पर्यणमद्ब्रह्म जगद्रूपेण केवलम्[1] ।
ब्रह्मणोऽन्ये शरीरे तु युज्येते नैव जीववत् ॥ ३४ ॥

'अशरीरं शरीरेषु ह्यनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति' ॥३५॥

शरीराभावमेतस्य यत्पठन्ति कठादयः ।
नेदं जीवपरं वाक्यं ब्रह्मप्रश्नोत्तरे स्थितम् ॥ ३६ ॥

'[2]त्रयाणाञ्चैवमुपन्यासः प्रश्नश्च' ।
इति सूत्रे स्फुटमिदं, विभुत्वं चे[3]ह बाधकम् ।
आनन्दमात्रकरपादमुखोदर एव सः ॥ ३७ ॥

साकारः श्रूयते, [4]जीववद्भिन्नावयवो न सः ।
सूत्रे तदत एवा'ऽऽह च तन्मात्र'मिति स्फुटम् ॥३८॥

---

१—निमित्तादिनिरपेक्षः । अतएव 'उपसंहारदर्शनादिति चेन्न क्षीरवद्धि ।' तदर्थस्तु—यथा घटोत्पत्त्यादौ मृत्तिकाया निमित्तादिसामग्री अपेक्षते तथा ब्रह्मणोऽपीति चेन्न, यथा दुग्धं निरपेक्षमेव दधि भवति तथा ब्रह्माऽपि । २—'स त्वमग्नि'मित्यादिनाऽग्नेः प्रश्नः तदुत्तरञ्च । 'यं प्रेते विचिकित्सा' इत्यादिना जीवप्रश्नस्तदुत्तरञ्च । 'अन्यत्र धर्मा'-दित्यादिना तु ब्रह्मप्रश्नः । 'सर्वे वेदा यत्पद' मित्यादिना तदुत्तरम् । तेन ब्रह्मप्रकरणमिदं न जीवस्य । ३—इह जीवपक्षे । विभुत्वं बाधकम् । भवन्मते तदणुत्वस्वीकारात् । ४—किन्त्विति शेषः ।

[1]शरीरेष्वित्युक्तितस्ते कल्प्येते चेद्बहूक्तितः ।
अनवस्थत्वोक्तितो द्वे एव नित्ये च ते कुतः ॥ ३९ ॥

किं च ते किं परिच्छिन्ने न वाऽऽद्ये[2] परिमा[3] तु का ।
अणुर्वा मध्यमा, नैव सा प्रसिद्धा तयोः क्वचित्[4] ॥४०॥

परिच्छिन्नतयाऽनन्तविश्वोत्पत्तौ क्षयोऽनयोः ।
किं चैतयोरधिष्ठानं वाच्यं[5] ब्रह्मैव चेत्त्वयोः[6] ॥ ४१ ॥

शरीरयोरधिष्ठानं शरीरीति न संगतम् ।
अपरिच्छिन्नपक्षे तु सांकर्यं[7] न कुतो भवेत् ॥ ४२ ॥

अन्योन्यस्मिन्यतोऽन्योन्यं विभुत्वे, नास्ति सर्वदा ।
अतो विभाजकं किं स्यादेशकालाद्यसम्भवात् ॥४३ ॥

---

१–'अशरीर' मित्यादिश्रुतौ 'शरीरेषु' इतिपदोपादानात्तस्यापि शरीरं कल्पयाम इति चेत्तस्यामेव श्रुतौ तस्मिन्नेव पदे बहुवचनं, पदान्तरे चानवस्थत्वोक्तिस्तर्हि तदनुरोधाद्बहूनि शरीराणि, न द्वे, अनित्यानि च, न नित्ये, इत्यपि स्वीकर्तव्यमित्यर्थः । २–'परिच्छिन्ने शरीरे' इति पक्षे । ३–परिमाणम् । ४–श्रुत्यादौ । ५–वाच्यमित्यन्तं पृथग्वाक्यम् । ६–इदमुत्तरान्वयि । ७–चिदचिच्छरीरयोर्व्यापकत्वपक्षे तु सांकर्यं ( परस्परैकीभावः ) कुतो न । यतः–उभयोर्व्यापकत्वादन्योन्यस्मिन्नन्योन्यं भवेत् । अन्यथा व्यापकत्वहानिः । तदानीं देशकालादीनामभावाद्द्वयोर्विभाजकं विभागदर्शकं सर्वदा नास्ति ।

देशाभेदेऽप्यसांकर्यं विभुत्वं च न मूर्तयोः ।
दृश्यतेऽथोद्गमार्थं[1] चाऽसाङ्कर्यार्थं[2] जडात्मनोः' ॥ ४४ ॥

तिरोभावादि[3] वक्तव्यं तत्प्रसिद्धं न ते मते ।
इत्यादि दूषणैर्वक्तुं न शक्ये चिदचित्तनू ॥ ४५ ॥

नापि शक्या[4] तयोः सत्ता सृष्टेः प्राक् ब्रह्मभिन्नयोः ।
'आत्मैवेदमग्र आसीत्' 'सदेवे'त्येवकारतः ॥ ४६ ॥
'एकमेवाद्वितीयं' तदित्यादिश्रुतिकोपनात् ।
इह[5] सत्तत्वमस्यादौ तच्च ब्रह्मैव गीयते ॥ ४७ ॥

'ओं तत्सदिति[6] निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' ।
'अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम्' ॥ ४८ ॥
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ।
श्रूयते 'सोऽनुवीक्ष्यान्यन्नात्मनोऽपश्य'दित्यपि[7] ॥ ४९ ॥

---

१–'व्युच्चरन्ती'तिश्रुतेर्बहिर्निःसरणादिकार्याय देशापेक्षेत्यर्थः । २–जडजीवरूपयोस्तयोः परस्परस्य भेददर्शनायाऽपि कालदेशाद्यपेक्षेत्यर्थः । ३–चित्प्रादुर्भावदेशकालयोरचितस्तिरोभावोऽपेक्ष्यते । अचित्प्रादुर्भावदेशे च चितस्तिरोभावोऽपेक्ष्यते । तथा त्वन्मतेऽस्वीकारात्तयोर्व्यापकत्वं न युक्तिसहमित्यर्थः । ४–वक्तुमिति शेषः । ५–इह 'सदेव सौम्येति' श्रुतौ सच्छब्देन, तत्वमस्यादिश्रुतौ च तच्छब्देन ब्रह्मैव गीयत इत्यर्थः । ६–तदेव गीता प्रमाणयति । ७–आर्थिकोऽनुवादः पदविपर्यासश्च छन्दोनुरोधात् ।

स[1]ती स्वा[2]न्ये चिदचिती दृष्टे नान्वीक्षयाऽपि चेत् ।
सर्वज्ञत्वं व्यापकत्वमीशत्वं तस्य भज्यते ॥ ५० ॥

द्वितीयेच्छा रत्यभावमूलिकैकाकिनः श्रु[3]ता ।
एका[4]कित्वं रत्यभावो द्वितीयेच्छा च[5] बाधिता ॥५१॥

नन्वेकएवाहमासमित्या[6]दौ देहजीवयोः ।
द्वयोः सत्वेऽप्येकपदं तदभेदाश्रयाद्यथा ॥ ५२ ॥

त[7]था द्विदेहयुग् ब्रह्माऽत्रा[8]त्मशब्देन गृह्यते ।
तथैकोऽहं स्थलेऽतोन्यं[9]न्नासीत् किंचित्तदेति चेत् , ५३

मैवं, जीवस्य देहेऽहंप्रत्ययोऽध्यासजो मृषा ।
अविद्य[10]येशेच्छयाऽस्तीत्येकत्वं प्रयुनक्ति स[11]ः ॥ ५४ ॥

न तथा ब्र[12]ह्मणो मिथ्याऽध्यासोऽज्ञानैकहेतुकः ।
स्थिराऽनवध्यसंख्येयकल्याणगुणशालिनः ॥ ५५ ॥

---

१–विद्यमाने । २–स्वप्रतियोगिकतात्त्विकभेदवती । ३–‘स नैव रेमे तस्मादेकाकी न रमते, सहैतावानास’ बृहदारण्यके । ४–चिदचित्सत्वादेकाकित्वस्य, ताभ्यां सहैव रतिसम्भवाद्रत्यभावस्य, तत एव च द्वितीयेच्छायाश्च बाधः । ५–चकारात्सर्वरूपेण भवनमपि बाधितम् । ६–लौकिकप्रयोगे । ७–लौकिकवाक्य इव । ८–‘सोऽनुवीक्ष्य नान्यदात्मन’ इत्यत्र । ९–अतो वेदे ‘एकोऽह’ मिति सत्यपि चिदचिदादि किंचिदपि तदा नासीदिति न, किन्त्वासीदेवेत्यर्थः । १०–अविद्याकरणकबन्ध इयं हेतुः । ११–लौकिकवाक्यादौ स जीवः प्रयुनक्तीत्यर्थः । १२–तथा ब्रह्मणो मिथ्याध्यासो न युज्यत’ इत्याद्यन्वयः ।

सर्वज्ञस्याविलिप्तस्य स्वतन्त्रस्य नियामिनः ।
स्वाधीनाऽविद्यादिशक्तेर्नित्यमुक्तस्य युज्यते ॥ ५६ ॥
युग्मम्

अथाऽऽ'त्मैवेद'मित्यादौ सर्वस्याप्यात्मरूपता ।
प्राक्सर्गाच्छ्रूयते, नान्यचिदचिद्रूपता क्वचित् ॥५७॥
वि[1]रुद्धा, ब्रह्मभिन्नत्वाद्वस्तुतो जडजीवयोः ।
आत्मशब्दस्य चिदचित्परत्वन्तु न शक्[2]यते ॥ ५८ ॥
निर्गुणः पर एवैकस्तद[3]र्थ इति निर्णयात् ।
'गौणश्चेन्नात्मशब्दा' दित्यादौ तत् सर्वसंमतम् ॥५९॥
उपादानं 'सहैतावानासे'त्युक्त्वा [4]तदेव हि ।
तथाऽभि[5]न्ननिमित्तोपादानदृष्टान्तपूर्वकम् ॥ ६० ॥
सर्वेषां जडजीवानां तत ए[6]वैकतः श्रुतः ।
उद्गमो, न तु तद्भिन्नचिदचिद्हेतः क्वचित् ॥ ६१ ॥
युग्मम्

'स य[7]थोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति' इति ॥

---

१–जडजीवयोर्ब्रह्मात्मकतेति शेषः । २–वक्तुमिति शेषः । ३–आत्मशब्दार्थः । ४–ब्रह्मैव । ५–अभिन्ननिमित्तोपादाने दृष्टान्तः सपूर्वं यस्मिन्कर्मणीति क्रियाविशेषणम् । ६–एकस्माद्ब्रह्मण एवेत्यर्थः । ७–बृहदारण्यके द्वितीयाध्यायप्रथमब्राह्मणे ।

अनेकोपनिषद्धुष्टमेतत्किं बहुविस्तरात् ।
न च जीवप्रकरणाद्वाक्यं जीवपरन्त्विदम् ॥ ६२ ॥
अणुमात्रात्तत:[1] सर्वानुद्गमाल्लिङ्गबाधनात् ।
भवेल्लिङ्गं प्रकरणाद्बलिष्ठं पूर्वतन्त्रत:[2] ॥ ६३ ॥
सुषुप्तौ ब्रह्मलीनस्य[3] तत उद्गमबुद्धये ।
सर्वेषामुद्गमस्तस्मात् पठ्यते परमात्मनः ॥ ६४ ॥
अथोत्पत्त्यप्ययाधारं तमेवोक्त्वा तदात्मता ।
श्राव्यते तैत्तिरीयादौ सर्वेषां भूतभाविनाम् ॥ ६५ ॥

यस्मिन्निद[4]ꣳसंच[5]विचैति सर्वं यस्मिन् देवा अधिविश्वे निषेदुः। तदेव भूतं तदुभव्यमा इदं तदक्षरे परमे व्योमन्॥

"प्रकृतिश्च[6] प्रतिज्ञादृष्टान्तानुपरोधादि"त्यादि ।
तस्याऽभिन्ननिमित्तोपादानतां प्राह सूत्रकृत् ॥
अभेदश्रुतयः सर्वाः संगच्छन्ते न चान्यथा ॥ ६६ ॥

---

१—जीवात् । सर्वोद्गमरूपलिङ्गस्य बाधादित्यर्थः । न हि परमात्मानमन्तरा सर्वोद्गमः कुतोऽपि संभवतीत्यर्थः । २—श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति मीमांसासूत्रात् । ३—जीवस्येति शेषः । ४—महानारायणोपनिषदि । ५—संचविचैतीति दिव्यप्रयोगेणोत्पत्तिलयौ बोध्यौ । ६—जगतः प्रकृतिरुपादानकारणं, चान्निमित्तकारणं च ब्रह्मैव । एवं सत्येवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा, 'यथा सौम्यैकेन मृत्पिण्डेने'त्यादि दृष्टान्तश्च नोपरुध्येत । ( १–४–२३– ) ।

पुमाँश्च प्रकृतिः सूक्ष्मतनू इत्यपि नोचितम् ।
यद्वक्ष्यते ब्रह्म तयोरुपादानं लयास्पदम् ॥ ६७ ॥

घटते तेन चिदचिद्वैशिष्ट्यं नैव कारणे ।
अन्तर्यामिब्राह्मणं न सूक्ष्मतद्देहसाधकम्[1] ॥ ६८ ॥

आम्नायतेऽत्र[2] वृत्तान्तः सर्गादुत्तरकालिकः ।
तिष्ठन्यमयतीत्येवं वर्त्तमाने शता[3] च लट् ॥ ६९ ॥

कालान्तरे[4] विभोर्भिन्नं किंचिद्व्याप्यं न विद्यते ।
सर्वस्य पूर्णब्रह्मत्वात् परिच्छेदाद्यभावतः[5] ॥ ७० ॥

पृथ्व्यादिनामानर्हं च तादृग्रूपानुपाश्रयात्[6] ।
यन्तव्याभावतस्तत्र नियमोऽपि न युज्यते ॥ ७१ ॥

सृष्टिकाले समुद्भूतं भूतप्राणेन्द्रियादिकम् ।
जीवाश्च तत एवाऽत्र[8] ये शरीरतयोदिताः ॥ ७२ ॥

'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद्वायु'रित्यादि ॥

---

१–ब्रह्मदेहयोः साधकम् । २–'यः पृथिव्यामित्यादि श्रुतिषु । ३–शतृशब्दस्य प्रथमैकवचनम् । ४–प्रपञ्चस्य व्याकृतनामरूपतया स्थित्यधिकरणकालातिरिक्ते । ५–आदिशब्दादानन्दांशतिरोभावादीनां संग्रहः । ६–सृष्टेः प्राक्विभक्तनामरूपेण परिणामाभावादित्यर्थः । ७–ब्रह्मकर्तृकः । ८–समुद्भूता इति शेषः । ९–अन्तर्यामिब्राह्मणे । 'यो विज्ञाने तिष्ठन्' इत्यादौ । १०–तैत्तिरीयोपनिषदि ।

'एतस्मा[1]ज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'त्यादिषु॥
अनेकत्र स्फुटमिदं शास्त्रे[2] मीमांसितं तथा।
आ[3]चार्येणान्त्यै[4]योः सम्यग्द्वितीयाध्यायपादयोः॥७३॥
इदानीमैच्छिकाद्भेदाद्रूपना[5]मविभागतः।
स्वात्मकस्य पृथिव्यादेः स[6]प्तम्याऽऽधारतोचिता॥७४॥
तत्र व्याप्ये स्थितः कृत्स्ने प्राणना[7]र्थं नियामकः।
अनुप्रविष्टः सृष्ट्वेदं भरणाय न लिप्यते॥ ७५॥
तत्तत्सृष्ट्वा तदेवानुप्राविशच्छ्रुतितः स्मृ[8]तेः।
'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः'॥ ७६॥

अ[9]तः समुद्रा गिरयश्च सर्वेऽ
स्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः।
अतश्च विश्वा ओषधयो रसाच्च[10]
येनैष भूतस्तिष्ठत्यन्तरात्मा॥

---

१—मुण्डकोपनिषदि द्वितीयमुण्डकप्रथमखण्डे। २—ब्रह्मसूत्रेषु। ३—व्यासेन। ४—तृतीयचतुर्थयोः। ५—ननु यद्यन्तर्यामिब्राह्मणस्य सूक्ष्मतद्देहसाधकत्वं नास्ति तर्हि कोऽर्थस्तस्येति स्वयमाशंक्य सिद्धान्ते तद्ब्राह्मणस्यैच्छिकभेददर्शकत्वं न वास्तवभेददर्शकत्वमिति तदाशयं विवृणोति। ६—'यःपृथिव्या'मित्यादिरूपया। ७—जीवनार्थम्। 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्या'दिति श्रुतेः। ८—गीतावाक्यात्। ९—तैत्तिरीये नारायणप्रश्ने। १०—प्रथमार्थे पञ्चमी। कठे रसाश्चेति पाठात्।

आनन्दादितिरोभावात्क्रीडनार्थं पृथक्कृताः ।
जडा जीवाश्च निःसङ्गं स्वान्तःस्थितमधोक्षजम् ॥७७॥

तदिच्छया न जानन्तीति 'न वेदे'ति भण्यते ।
शरीरमिति भेदस्तु सृष्टिकालेऽपि लुप्यते ॥ ७८ ॥
युग्मम्

पृथ्व्यादीनां त्वन्मतेऽपि स्थूलानामेव वर्ण्यते ।
शरीरताऽत्रेति तेन न सूक्ष्मे सिद्ध्यतस्तनू ॥ ७९ ॥

भावत्कौ सूक्ष्मदेहौ चेद्वेदादिप्रायगोचरौ ।
तदा "यश्चिति तिष्ठन् योऽचिति तिष्ठन् इति द्वयम् ८०

एवं ब्रूयात्तत्तु नोक्तं तस्मात्तौ श्रुत्यसंमतौ ।
कारणे, तेन जीवानामतन्त्रं त्वन्मतं त्रयम् ॥ ८१ ॥

याऽऽधारत्वनियम्यत्वव्याप्यत्वैर्दर्शिता भिदा ।
उपक्रमोपसंहारविचारे सा न वास्तवी ॥ ८२ ॥

---

१—आदिशब्दादैश्वर्यादेः । जडे चिदंशस्य च तिरोधानम् । २—अधस्तादक्षजं यस्मात्तम् । इन्द्रियजन्यज्ञानाविषयमित्यर्थः । ३—ब्रह्मेच्छया । ४—तयोः शरीरत्वकथनात् । ५—त्वया स्थूलत्वेनाऽभिमतानां पृथिव्यबग्निप्रभृतीनाम् । ६—अन्तर्यामिब्राह्मणे । ७—द्विवचनम् । तनूविशेषणम् । स्थूलानामेव पृथिव्यादिशब्दवाच्यत्वाच्छरीरता न सिद्ध्यतीत्यर्थः । ८—भवदभिमतौ । ९—वाक्यद्वयमेव ब्रूयान्न तु 'यः पृथिव्या'मित्यादिवाक्यानि । १०—तादृशं वाक्यं तु नोक्तमित्यन्वयः । ११—श्रुतेरविवक्षितम् ।

'सो[1]ऽब्रवीत् पतञ्जलं काप्यं याज्ञिकाᳯश्च यो वै तत्काप्य सूत्रं विद्यात्तं चान्तर्यामिणमिति स ब्रह्मवित्स लोकवित्स देववित्स भूतवित्स आत्मवित्स सर्वविदिति तेभ्योऽब्रवीत्तदहं वेद' ॥

इत्येकस्यैव विज्ञानात्सर्वविज्ञानमीर्यते ।
सर्वस्य तदुपादानकत्वे सत्येव संभवेत् ॥ ८३ ॥
एकमृत्पिण्डविज्ञानाद्विज्ञातं स्यात्तु मृन्मयम् ।
एकेन लोहमणिना सर्वं लोहमयं यथा ॥ ८४ ॥

'अ[2]दृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता एष त आत्मान्तर्याम्यमृत इति' ॥

कर्त्तारो दर्शनादीनां जीवाः स्वांशतयाऽखिलाः ।
ब्रह्माभिन्ना विस्फुलिङ्गवदित्येवेह बोध्यते ॥ ८५ ॥
न चेत्तादृग्जीवसत्वान्नोपपद्येत तात्त्वि[3]कः ।
सें[4]धो द्रष्ट्रन्तरादीनां तस्मात् सर्वं तदात्मकम् ॥ ८६ ॥
सृष्टिकाले परिच्छेदो भेदोऽचित्त्वं विभक्तता ।
अनुप्रवेशो नियमो, न पूर्वापरकालयोः ॥ ८७ ॥
इदानीमेवेदमत एकदे[5]श्येव तन्मतम् ।
तदावरणेऽभङ्गेऽपि दर्शिताऽस्यैकदेशिता ॥ ८८ ॥

---

१—उपक्रमे । २—उपसंहारे । ३—अनौपचारिकः । ४—निषेधः । 'नान्योऽतोऽस्ती'ति श्रुताविति शेषः । ५—'यः सर्वत्र संतिष्ठन्' इति निबन्धश्लोकव्याख्यानव्याख्याने ।

ननु सर्वमतान्येवं दूषयन्द्वेषकृद्भवान् ।
इति चेन्न विनोदोऽयं विदुषां तत्त्व[1]निर्णये ॥ ८९ ॥
भक्तिज्ञाने यत्र विष्णोर्यत्र वेदः परा प्रमा ।
मतानि तानि सर्वाणि जीवोद्धारस्य हेतवः ॥ ९० ॥
सत्त्वादिभेदतो जीवाश्चित्रप्रकृतयोऽखिलान् ।
उद्धर्तुं प्रभुणा नाना सम्प्रदायाः प्रकाशिताः ॥ ९१ ॥
यथाधिकारं तेष्वे[2]ते प्रवर्त्तन्ते ततः फलम् ॥
ऐहिकामुष्मिकं मोक्षो विविधश्च यथायथम् ॥ ९२ ॥
ब्रह्मण्यलौकिकेऽचिन्त्ये स्वाभिन्नानन्तशक्तिनि ।
तद्रूपस्य[3] व्यवस्थानमभेदाच्छ्रुतिषूदितम् ॥ ९३ ॥

वितरति यत् स्वयमगुणं
विविधेभ्यः कामना नाना ।
सगुणैः शिवादि[4]रूपै-
स्तदंशिभूतं भजे परं ब्रह्म ॥ ९४ ॥

इति श्रीमद्वल्लभाचार्य्यमतवर्त्तिश्रीव्रजवल्लभचरणानुचरपञ्चनदी-घनश्यामभट्टात्मजश्रीगोवर्द्धनशीघ्रकवेः कृतौ वेदान्तचिंतामणौ विशिष्टाद्वैतविचारो नामैकादशं प्रकरणम् ॥ ११ ॥

---

१—निर्णयनिमित्तम् । २—सम्प्रदायेषु । ३—तदभिन्नस्य ब्रह्मात्मकस्येत्यर्थः । ४—तेनाग्रिमे प्रकरणे गुणावतारादिदेवानां स्वरूपादि वक्ष्यत इत्यपि सूचितम् ।

## अथ शैवशाक्तमतविचारो नाम

## द्वादशं प्रकरणम् ।

लीलायै शिवशक्त्याद्याः कृता येन विभूतयः ।
नैर्गुण्यहेतुं भक्तानां नमामो निर्गुणं परम् ॥ १ ॥

शैवा[1] रामानुजमततस्कराः सर्ववाङ्मयम् ।
योजयित्वा[2] शिवपरं विशिष्टाद्वैतमैरयन् ॥ २ ॥

निर्गुणं स्यात्परब्रह्म श्रुते[3]र्निर्गुणमुक्तिकृत् ।
शंभोस्तमःप्रधानस्य ब्रह्मत्वं न तथोचितम्[4] ॥ ३ ॥

निर्गुणः स्यात्परशिवो व्यूहादिस्थो गुणीति चेत् ।
न, सूतसंहितादौ वः सगुणः सोऽपि कथ्यते ॥ ४ ॥

'उमार्द्ध[5]विग्रहः श्रीमान्सोमार्द्धकृतशेखरः ।
ब्रह्मविष्णुमहेशानैरुपास्यः परमेश्वरः ॥ ५ ॥
ऋतं[6] सत्यं परब्रह्म पुरुषं साम्बमीश्वरम्' ।
अष्टमे नवमेऽध्याये तन्मतोपक्रमात् स्फुटम् ॥ ६ ॥

---

१—नीलकण्ठादयः स्मार्ता द्विधा प्रसिद्धा दाक्षिणात्यलोके । शैवस्मार्ताः।भागवतस्मार्ताश्च । तत्र भस्मत्रिपुण्ड्धारिणोऽद्वैतसिद्धान्ताभिमानिन आद्याः।द्वितीयास्तु ऊर्ध्वपुण्ड्रादिधारिणोऽद्वैतिनः।अत्रोक्ताः शैवास्तु पाशुपता ज्ञेयाः । २—ब्रह्मसूत्रभाष्यशिवतत्वविवेकलिङ्गार्चनचन्द्रिकादिषु । ३—श्रुतितः । ४—विभूतित्वेन चरमकोटिकं ब्रह्मत्वं सूचितमेवेतिभावः । ५—अष्टमाध्यायस्थमिदम् । ६—नवमाध्यायस्थमिदम् ।

महेशानोपास्यलिंगाद्वाक्ये परशिवः स्फुटः ।
साहित्यात्सर्वदा शक्तेः सगुणत्वं दृढीकृतम् ॥ ७ ॥

शक्तेः परस्वरूपेऽपि [1]तद्रहस्ये नि[2]रूपितम् ।
'सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी' ॥ ८ ॥

'शिवः[3] शक्तियुतः शश्वत्त्रिलिंगो गुणसंवृतः ।
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥ ९ ॥
ततो विकारा अभवन् षोड[4]शामीषु कश्चन ।
उपाधावन्वि[5]भूतीनां सर्वासामश्नुते फलम् ॥ १० ॥
हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः ।
स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेत्' ॥ ११ ॥

श्रीमद्भागवतेऽप्युक्तं सगुणत्वं शिवस्य तु ।
'वै[6]ष्णवानां यथा शंभु'र्भक्तः परशिवः परम् ॥ १२ ॥

व्यूहवर्ती तु संहारशक्तिकार्ये निरूपितः ।
तत्पाद्मब्रह्मवैवर्तपंचरात्रादिवाक्यतः ॥ १३ ॥

अनेकैर्वेदभागैश्च मयाऽन्यत्र प्रपञ्चितम् ।
कृष्ण एव परं ब्रह्म सदानन्दस्तथा श्रुतिः ॥ १४ ॥

---

१—तान्त्रिकोऽयं रहस्यभागः सप्तशतीपाठोत्तरम्पठ्यमानः। २—त्रिगुणात्मकत्वमुक्तम् । ३—श्रीभा. १० स्कं. ८८ अ. । ४—महाभूतेन्द्रियमनांसि । ५—दिग्वातार्कादितदाधिदैविकरूपविभूतीनां मध्य इत्यर्थः । ६—द्वादशस्कन्धे ।

'[1]कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
द्वयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' ॥ १५ ॥
शिवादिरूपैः सगुणैः कामान्पूरयति प्रभुः ।
स्वयन्तु निर्गुणो देवो भक्तानां निर्गुणत्वकृत् ॥ १६ ॥

[2]यस्याङ्घ्रिपङ्कजरजोऽखिललोकपालै-
मौंल्युत्तमैर्धृतमुपासिततीर्थतीर्थम् ।
ब्रह्मा भवोऽहमपि यस्य कलाः कलायाः
श्रीश्चोद्वहेम चिरमस्य नृपासनं क्व ॥ १७ ॥

'[3]त्वामेवाऽन्ये शिवोक्तेन मार्गेण शिवरूपिणम्' ।
श्रीमद्भागवतेऽस्येति भगवद्रूपता मता ॥ १८ ॥
'येऽप्यन्यदेवता भक्ता' इति गीतासु चोदितम् ।
पाद्मे कार्त्तिकमाहात्म्ये प्रथमाध्याय ईर्य्यते ॥ १९ ॥
'[4]सौराः शैवाश्च गाणेशा वैष्णवाः शक्तिपूजकाः ।
मामेव प्राप्नुवन्तीह वर्षाम्भः सागरं यथा ॥ २० ॥
एकोऽहं पञ्चधा जातः क्रीडया नामभिः किल ।
देवदत्तो यथा कश्चित्पुत्राद्याह्वाननामभिः' ॥ २१ ॥
इत्थं भगवता प्रोक्ता शिवादीनां निजांशता ।
शिवादिरूपं शैवाद्या भजन्तः प्राप्नुवन्ति तम्[5] ॥ २२ ॥

---

१—तापनीयस्था । २—श्रीभा. उत्तरार्द्धे स्कन्ध. १० । ३—श्रीभा. पूर्वार्द्धे स्कन्ध. १० अक्रूरस्तुतौ । ४—श्लोक. २६—२७. । ५ क्रमेण भगवन्तमेव प्राप्नुवन्तीत्यर्थः ।

विष्णुस्सत्वगुणोपाधिस्तद्भक्ता इह[1] वैष्णवाः ।
शम्भोरुपासनं[2] चक्र[3] आसुरान्मोहयन्क्वचित् ॥ २३ ॥
उत्तरोत्तरसर्गार्थं[4], तत्पाद्मे स्पष्टमुच्यते ।
विष्णोर्नामसहस्रे[5] तु शिवेन गिरिजां प्रति ॥ २४ ॥
प्रोच्यते पञ्चरात्रे च यत्स्वस्मै हरिणोदितम् ।
'त्वामाराध्य तथा शम्भो ग्रहीष्यामि वरं सदा ॥ २५ ॥
स्वागमैः[6] कल्पितैस्त्वं च जनान्मद्विमुखान्कुरु ।
मां च गोपय येन स्यात्सृष्टिरेषोत्तरोत्तरा' ॥ २६ ॥
खण्डितः पण्डितकरभिन्दिपाले प्रहस्ततः ।
भाष्यप्रकाशे तद्वादो विस्तरात्पुरुषोत्तमैः ॥ २७ ॥

---

१—'सौरा' इत्यादिपाद्मवाक्ये । इह वैष्णवा अपि सौरादीनां साहचर्याद्गुणावतारविष्णोरुपासका एव ग्राह्या न तु पुरुषोत्तमसेवकाः । २—ननु रामाद्यवतारेषु विष्णोः शिवभक्तिकरणात्सेव्यसेवकभावविपर्यय एव कुतो नेत्याशंक्याऽऽह शंभोरिति । तेन श्रीकृष्णचन्द्राभ्युदयादौ शंकरलालकविस्तट्टीकाकृद्धाथीभाईशर्मा च द्वावपि तथाविधपुराणादिवाक्यानां तात्पर्यानवबोधिनावपि परास्ताविति ज्ञेयम् । ३—भगवान् कृतवानित्यर्थः । ४—पूर्वान्वयि । यदि भगवान्स्वस्य सर्वोत्कृष्टत्वं सर्वान्प्रत्यविशेषं दर्शयेत्सर्वेऽपि मुक्ताः स्युः । सृष्टिरवरुद्धा भवेत्तत्सृष्टिवृद्ध्यर्थं तथा करोतीत्यर्थः । ५—शिवेन पार्वतीम्प्रति विष्णुसहस्रनाम्न्युक्तं तदेवाक्षरशो नारदपञ्चरात्रेऽप्युपलभ्यते तत्रोभयत्रेदं भगवदनुवादरूपं शिववचनमस्ति । ६—शैवादिशास्त्रैः ।

शाक्ता जगदुपादानं जल्पन्त्यल्पश्रुता हरिम् ।
कल्पयन्ति निमित्तं च शक्तिं तां परतः पराम् ॥२८॥
देवीसूक्तादिना श्रुत्या मार्कण्डेयादिषूदितम् ।
विशेषतश्च तन्त्रेषु तत्स्वरूपं निरूप्यते ॥ २९ ॥
तां परां कारणं प्राह सप्तशत्यां स्तुवन्विधिः ।
'परापराणां परमा त्वमेव परमेश्वरी ॥ ३० ॥
त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते जगत् ।
त्वयैतत्पाल्यते देवि त्वमत्स्यन्ते च सर्वदा' ॥ ३१ ॥
इति चेच्छ्रूयतां मूढ शक्तयो ब्रह्मणस्तु याः ।
तदभिन्नाश्च तद्रूपाः, श्रुत्या पूर्वं निरूपितम् ॥ ३२ ॥
गुणात्मकमचिद्रूपं प्रकृतिः सृष्टिकालिकम् ।
शक्तिप्रकृत्योर्दुर्गा तु विभूतिः कार्यमिष्यते ॥ ३३ ॥
रंत्यै बिभित्सुना सर्वास्तिरोभाव्यापि तेन ताः ।
तदंशाः स्वविभूतिभ्यो दत्ताः केचन केचन ॥ ३४ ॥
आदायामरशक्तीनामंशान् सा निर्मिता पुरा ।
महिषासुरनाशायेत्यस्यास्तच्छक्तिकार्यता ॥ ३५ ॥

---

१—पुराणभागेषु । २—शक्तिस्वरूपम् । ३—'परास्य शक्ति'रित्यादिरूपया । ४—इतीतिशेषः । ५—सत्वादिरूपम् । ६—रमणार्थं भेदं चिकीर्षुणेति यावत् । तेन ब्रह्मणा ताः सर्वा अपि स्वालौकिकशक्तीः कार्येषु तिरोभाव्याऽपि तदंशाः शतांशाः केचन केचन स्वविभूतिभ्यो दुर्गादिभ्यो दत्ता इत्यन्वयार्थौ । ७—दुर्गा ।

मुख्यत्वेन गुणाश्चाशास्त्रिगुणोपाधिधारिणाम् ।
त्रयाणामागतां तत्रेत्यस्याः प्रकृतिकार्यता ॥ ३६ ॥
कार्याणि कार्यरूपायां शक्तीनां प्रकृतेरपि ।
ततोऽस्यामुपचर्यन्ते माहात्म्यख्यातये क्वचित् ॥ ३७ ॥
उक्तं द्वितीयेऽध्याये तत्सप्तशत्याः, समाहितः ।
प्रथमाध्यायवृत्तान्तस्तट्टीकायां मया पुनः ॥ ३८ ॥
देवीसूक्ते स्वमाहात्म्यं देव्यैवोक्त्वा ततो मम ।
योनिरप्स्वन्तःसमुद्र इत्युक्ता हरिकार्यता ॥ ३९ ॥
तस्मात् सृज्यतया नैव घटतेऽस्या निमित्तता ।
शक्तिमत्पारतन्त्र्यं च शक्तित्वाद्बहुधोदितम् ॥ ४० ॥
तन्नात्र विस्मयः कार्यो योगनिद्रा जगत्पतेः ।
महामाया हरेश्चैषा तया संमोह्यते जगत्' ॥ ४१ ॥
इत्युक्तं प्रथमाध्याये, तथा नारायणीस्तवे ।
'या देवी सर्वभूतेषु विष्णुमायेति शब्दिता' ॥ ४२ ॥
परत्वं तत्र शक्तित्वाभिप्रायेण निरूपितम् ।
त्वयेति करणं ज्ञेयं, शक्तेर्नो कर्तृतोचिता ॥ ४३ ॥

---

१–गुणावताराणां ब्रह्मविष्णुमहेश्वराणाम् । २–दुर्गायामागता इत्यर्थः । ३–इदमुत्तरेणान्वेति । ४–ऋग्वेदप्रसिद्धे । ५–'अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभि'रित्यादिना देव्यैव स्वमाहात्म्यं (ब्रह्मरुद्रोत्पादकत्वादिरूपम्) उक्त्वा ततः 'मम योनिरन्तःसमुद्रेऽप्सु' इति स्वस्य हरिकार्यतोक्तेत्यन्वयार्थौ । ६–'त्वयैतद्धार्यते' इत्यादिवाक्ये ।

विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने ।
तथा संहृतिरूपान्ते जगतोऽस्य [1]जगन्मये ॥ ४४ ॥

जगन्मये भगवती त्रिधा शक्तिस्तु या स्थिता ।
तद्रूपा त्वमिति स्तुत्या त्वयेति करणं ध्रुवम् ॥ ४५ ॥

समवायि निमित्तं च ब्रह्मैव श्रुतिसंमतम् ।
विभूतीनां च माहात्म्यं ब्रह्ममाहात्म्यबोधकम् ॥ ४६ ॥

राज्ञः स्तुतावमात्यादिप्रशंसा पर्यवस्यति ।
स्तुतः क्वचित् पुराणेषु तत्तद्रूपस्ततो हरिः ॥ ४७ ॥

'आकाशात् पतितं तोयं यथा गच्छति सागरम् ।
सर्वदेवनमस्कारः केशवं प्रति गच्छति' ॥ ४८ ॥

'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।'
इत्यादौ [2]फलदः पूज्यस्तत्तदंशी स एव हि ॥ ४९ ॥

पूर्वोक्तपाद्म[3]वाक्येऽपि स्फुटा भगवदंशता ।
तन्त्रशास्त्राण्ययुक्तानि मोहनाय कृतानि यत् ॥ ५० ॥

अतस्तदनुसारेण मद्यं मांसं च मैथुनम् ।
मन्वाना उत्तमं कौलाद्या यान्ति यमयातनाः ॥ ५१ ॥

तच्छाक्तकिरणे तन्त्रकिरणेऽन्यत्र दुर्मतम् ।
दुर्गापाठविवृत्यादौ विस्तराद्दूषितं मया ॥ ५२ ॥

---

१—सप्तम्यन्तम् । २—'मयैव विहितान्हितान्' इत्यादि भगवदुक्तेः ।
३—'शैवाः सौरा' इतिवाक्ये ।

तस्मात्तदद्वयं ब्रह्म लीलायै भावितद्वयम् ।
विमोहशास्त्रसंभ्रान्तैरशक्यं ज्ञातुमासुरैः ॥ ५३ ॥
दैवा भजन्तु तत् स्वाचार्योक्तभक्त्या परात्परम् ।
सदानन्दं वेदरीत्या न भ्रमन्तु च मोहकैः ॥ ५४ ॥
रूपे[1]ऽक्षरे[2] पदे[3] योऽध्यात्म्ये क्रीडति सदा स्वरूपेण ।
अधिभूतक्षरकर्त्ता पुरुषोत्तममाधिदैविकं वन्दे ॥ ५५ ॥[4]

इति श्रीमद्वल्लभाचार्यमतवर्तिश्रीव्रजवल्लभचरणानुचरपंचनदीघन-श्यामभट्टात्मजश्रीगोवर्द्धनशीघ्रकविविरचिते वेदान्तचिन्तामणौ शैवशाक्तमतविचारो नाम द्वादशं प्रकरणम् ॥

## ॥ अथ त्रयोदशं प्रकरणम् ॥

बल्लवीवल्लभो[5] नाना[6] धामन्यक्षरनामनि ।
कलयँल्ललिता लीलाः सदा[7] सस्तादनुग्रही ॥ १ ॥
अधिदैवादिभेदेन ब्रह्मणोऽस्ति त्रिरूपता ।
क्षरोऽक्षर इति द्वेधा तथाऽद्यः पुरुषोत्तमः ॥ २ ॥

---

१ स्वरूपभूत इत्यर्थः। २—अक्षराख्ये। ३—स्वधाम्नि। ४—तेनाऽग्रिमप्रकरण आध्यात्मिकादिभगवत्स्वरूपत्रयविचारो वर्तत इत्यपि सूच्यते। ५—श्रीगोपीप्रियः। ६—विविधाः। इदं लीलाविशेषणम्। ७—सदेतिपृथक्पदम्। किं वा दासैः सहित इति समस्तम्। तत्र 'खर्परे शरीति' विसर्गलोपः।

पूर्णा[1]नन्दमयाकारः सर्वाकारानुभावनः ।
सच्चिदानन्दरूपोऽसत्पदार्थास्पृष्टविग्रहः ॥ ३ ॥

अलौकिकीभिः स्वाभिन्नाभिर्नित्यानन्तशक्तिभिः ।
स्वाभाविकीभिरपराहतकार्याभिराश्रितः ॥ ४ ॥

विरुद्धसर्वधर्माणामेकाधारोऽविरोधतः ।
अप्राकृताखिलगुणो निर्गुणो[2]ऽविकृतो विभुः ॥ ५ ॥

नित्यः पूर्णोऽव्ययो व्याप्त एक एकरसः सदा ।
ज्ञेयः कृष्णः परम्ब्रह्म प्र[3]मासु पुरुषोत्तमः ॥ ६ ॥

अन्यत्त[4]स्याक्ष[5]रं रूपं सच्चिदानन्दमात्रकम् ।
तद्रूपं ग[6]णितानन्दं पूर्णानन्दो हरिः स्वयम् ॥ ७ ॥

'सैषाऽनन्दस्य मीमांसा–भवती'त्यादिना श्रु[7]तौ ।
विध्या[8]नन्दाच्छतगुणोऽक्षरानन्दो हि गण्यते ॥ ८ ॥

आनन्दमात्रकरपादमुखोदरता ह[9]रेः ।
तदान[10]न्दमयोऽभ्यासादिति सूत्रे समर्थितम् ॥ ९ ॥

---

१–पूर्णत्वं गणनाशून्यत्वमानन्दे । २–सत्वादिगुणत्रयरहितः । ३–वेदादिप्रमाणेष्वित्यर्थः । ४–पुरुषोत्तमस्य । ५–अक्षराख्यम् । ६–शारीरादिसर्वसुखोपेतचक्रवर्त्यानन्दापेक्षया सहस्रगुणितपरार्धगुणानन्दम् । ७–तैत्तिरीयब्रह्मवल्ल्याम् । ८–प्राजापत्यानन्दात् । ९–पुरुषोत्तमस्य । १०–वाग्विषयगणनाराहित्यम् । तेन 'यतो वाचो निवर्तन्त' इति तत्रस्थश्रुत्यर्थः सूचितो भवति ।

अन्ये तु भगवद्धर्माः सर्वे तत्र हरीच्छया ।
आविर्भावतिरोभावशालिनः क्रीडनास्पदे ॥ १० ॥

व्याप्तोऽक्षरः स्वयं व्याप्तो व्याप्तिर्दुग्धाम्बुवद्द्वयोः ।
उभे अपि यथैकस्मिन् कलशे व्याप्य तिष्ठतः ॥ ११ ॥

यथेक्षुरसयोः सर्पिर्दध्नोश्च तिलतैलयोः ।
अलोको व्यापिवैकुण्ठः क्वचिद्गोलोक इत्यपि ॥ १२ ॥

तदेवं परमं व्योम परं धाम परं पदम् ।
अक्षरं बृहदव्यक्तं पर्य्यायैः परिकीर्त्यते ॥ १३ ॥

---

१—अक्षरे । अयमाशयः-श्रीकृष्णपुरुषोत्तमादिनामवाच्यस्य परब्रह्मणः 'एकोहं बहुस्यां' 'हन्त तिरोसानी' त्यादिश्रुतेर्बहिःक्रीडनेच्छायां तिरोहित-धर्मरूपानन्दमिव सच्चिदानन्दात्मकं किंचिद्रूपान्तरमाविर्भवति तदेव प्रथमं कार्यमपि सर्वकारणकारणम् । कार्यत्वं चाऽत्र सर्वभवनसामर्थ्य-रूपमायावेष्टितत्वरूपरूपान्तरग्रहणमेव न विकारित्वम् । सर्वकारण-कारणरूपपरमाहात्म्यरूपत्वादेव 'ब्रह्म पुच्छं प्रतिष्ठे'त्यादिश्रुतिषु प्रतिष्ठे-त्युक्तम् । २—अत्र 'तिलेषु तैलं दधनीव सर्पिरि'त्यादिश्रुतिरप्यनुसंधेया । ३—'पश्यतां सर्वलोकानामलोकं समपद्यत' । ४—बृहद्वामनपञ्चरात्रा-दिषु । ५—अक्षरब्रह्मैव । ६—'तदक्षरे परमे व्योमन्' 'ऋचोऽक्षरे परमे व्योमन्' 'परमे व्योमन् प्रतिष्ठिता' इत्यादिश्रुतिषु । ७—'अव्यक्तोऽक्षर इत्युक्त' इति गीतादौ ।

परमात्मा[1] परं ब्रह्मेत्यादिभिः[2] पुरुषोत्तमः ।'
बहु स्फुटीकृतं वेदादौ[3] तद्रूपं तथा स्मृतिः[4] ॥ १४ ॥
'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यद्गत्वा न निवर्त्तन्ते तद्धाम परमं मम' ॥ १५ ॥
'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' ।
इत्युक्तो भक्त्यैकलभ्योऽग्रे परः पुरुषोत्तमः ॥ १६ ॥
तदास्थाय [5]निजं धामेच्छानुरूपविधायकम् ।
लीला नित्याः स्वयं शुद्धा अनिरुद्धा दधाति सः[6]॥१७॥
अनागन्तुकधर्मत्वात्तल्लीलास्वखिलास्वपि ।
न शुद्धाद्वैतबाधः स्यादभेदाद्धर्मधर्मिणोः ॥ १८ ॥
ननु चेदक्षरं नित्यं नित्यश्च पुरुषोत्तमः ।
भेदः स्याद्वास्तवो द्वैतं न चेद्व्यूनोऽक्षरः कथम् ॥१९॥
इति चेन्न, हरिर्यत्र[7] प्रियमोदप्रमोदवान् ।
आनन्दात्मा पक्षिरूपस्तैत्तिरीयेषु[8] पठ्यते ॥ २० ॥
ब्रह्मपुच्छं प्रतिष्ठेति पुच्छं तत्राऽक्षरं श्रुतम् ।
न पुच्छं पक्षितो भिन्नं नाक्षरं पुरुषोत्तमात् ॥ २१ ॥

---

१—'तयोरैक्यं परंब्रह्म' 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' 'ब्रह्मेतिपरमात्मेति' इत्यादिश्रुतिस्मृतिपुराणेषु । २—पर्यायैरितिशेषः । ३—मुण्डकाद्युपनिषत्सु । ४—श्रीगीतावाक्यम् । ५—अक्षरम् । ६—पुरुषोत्तमः । ७—आनन्दब्रह्मवल्ल्याम् । ८—'अन्योन्तर आत्मानन्दमयः । तस्य प्रियमेव शिर'इत्यादिश्रुतौ ।

सर्वावयववान् पक्षी स्वतन्त्रः पुच्छतोऽधिकः ।
पुच्छन्त्ववयवत्वेन न्यूनं भेदो न वस्तुतः ॥ २२ ॥

अल्पधर्मकमेकांशभूतं न्यूनं तथाऽक्षरम् ।
सर्वधर्माश्रयः सोऽस्मादंशिभूतोऽधिकः श्रुतः ॥ २३ ॥

न भेदो भगवत्सच्चिदानन्दात्माऽक्षरोऽपि यत् ।
पुच्छं पक्षिपदार्थान्न विभक्तमिह तत्तथा ॥ २४ ॥

अतोऽक्षरस्य चरणत्वमपि क्वचिदुच्यते[1] ।
प्रतिष्ठेति पदात्तस्य प्रोक्तैवोत्तमधामता ॥ २५ ॥

स्वाभिन्न एकांशभूते सच्चिदानन्दधामनि ।
आत्मतन्त्रः सर्वधर्मा सर्वदा रमते विभुः ॥ २६ ॥

[2]नमो नमस्तेऽस्त्वृषभाय सात्वतां
विदूरकाष्ठाय मुहुः कुयोगिनाम् ।
निरस्तसाम्यातिशयेन राधसा
स्वधामनि ब्रह्मणि रंस्यते नमः ॥ २७ ॥

यदा बही रिरंसुः स्यात् स्वरूपादक्षरात्मकात् ।
तिरोभावेन धर्माणां प्रपञ्चं सृजति क्षरम् ॥ २८ ॥

नन्वक्षरमुपादानं निमित्तं पुरुषोत्तमः ।
तदाऽभिन्ननिमित्तोपादानवादः कथं भवेत् ॥ २९ ॥

---

१—'हृदोपगुह्याऽर्हपदं पदे पदे' इति श्रीभागवतादौ । २—श्रीभा—२ स्कं. ।

एवं चेच्छृणु चेद्धेमकूटात्तत्पिण्ड उद्धृतः ।
सृज्येत कटकाद्यस्मान्न कूटः समवायि किम् ॥ ३० ॥

ऊर्णनाभिः सृजञ्जालं लालया स्वांशभूतया ।
लीलयाऽश्नन्न किं तस्योपादानं स भविष्यति ॥ ३१ ॥

उपक्रम्याक्षरं ब्रह्म मुण्डकेष्वाद्यमुण्डके ।
'तद्भूतयोनिं परिपश्यन्ति धीरा' इतीर्यते ॥ ३२ ॥

'तथाऽक्षरात् संभवतीह विश्व'मिति चोच्यते ।
तथाऽक्षराद्विविधाः सोम्य भावाः
प्रजायन्ते तत्र चैवापि यन्ति ॥ ३३ ॥

द्वितीयमुण्डकेऽप्युक्तं तस्मात् सर्वं परात्मकम् ।
अतः 'पुरुष एवेदं विश्वं' तत्रैव पठ्यते ॥ ३४ ॥

'तदाहुरक्षरं ब्रह्म सर्वकारणकारणम् ।
विष्णोर्धाम परं साक्षात् पुरुषस्य महात्मनः' ॥३५॥

---

१–सुवर्णपिण्डात् । २–सुवर्णशैलस्तद्राशिर्वा । स हि कटकादेः समवायि भवत्येव । ३–जालस्य । एवं चोर्णनाभिवत्परंब्रह्म लालावदक्षरो जालवत्प्रपञ्चः । ४–अक्षरस्य पुरुषोत्तमाभिन्नत्वेन प्रपञ्चे पुरुषोत्तमोपादानकत्वानपायात् । ५–द्वितीयमुण्डकप्रथमखण्डसमाप्तौ । ६–सर्वस्य जगतः कारणानां पञ्चमहाभूतादीनां कारणमित्यर्थः ।

तृतीयस्कन्ध एकादशाध्याय इति, कारणम् ।
तदेव [1]जगतो, धामास्य[2] चोक्तं, हरिणा[3] तथा ॥ ३६ ॥
'[4]अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ ३७ ॥
अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके' ॥ ३८ ॥
तस्माद्विश्वं क्षरमिदमाविर्भावितमक्षरात् ।
क्षरणन्तु तिरोभावः क्षरत्यन्ते[5] ततः[6] क्षरम् ॥ ३९ ॥
न धाम्नोऽस्ति तिरोभावः कदाचिदिति सोऽक्षरः ।
एतावतीतः पुरुषोत्तमो गीतासु रूपितः ॥ ४० ॥
'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ ४१ ॥
उत्तमः पुरुषस्त्वन्यः[7] परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ ४२ ॥
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः[8] पुरुषोत्तमः' ॥ ४३ ॥

---

१—'कारण'मितिपदेनान्वेति । २—गीतायामिति शेषः । ३—पुरुषोत्तमेन । ४—'अव्यक्तोऽक्षर इत्युक्त' इति भगवद्वाक्यादक्षरो ग्राह्यो नतु प्रधानम् । ५—लये । ६—क्षरणाद्धेतोः । ७—ऐच्छिकादेव भेदाद्भिन्नः । ८—क्षरातीतत्वेन लोके पातञ्जलदर्शनादौ प्रसिद्धः । अक्षरादुत्तमत्वेन तु 'अक्षरात्परतः पर' इति श्रुतौ प्रसिद्धः ।

क्षराक्षरौ तौ पुरुषौ ताभ्यामेष यदुत्तमः।
लोके वेदे क्रमात्तस्मात् पुरुषोत्तम उच्यते ॥ ४४ ॥

'न तस्य[1] कालावयवैः परिणामादयो गुणाः।
अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययम् ॥ ४५ ॥

न यत्र वाचो न मनो न सत्वं
तमो रजो वा महदादयोऽमी ॥
न प्राणबुद्धींद्रियदेवता वा
न सन्निवेशः खलु लोककल्पः[2] ॥ ४६ ॥

---

१—श्रीभागवतम्। स्कं १२—अ. ४ श्लो १८। २—अक्षरस्य हि द्वेधा स्फूर्तिर्भवति। भक्तानां पुरुषोत्तमधामत्वेन शुद्धाद्वैतज्ञानिनां च निर्धर्मज्ञानत्वेन। तत्रैतदुत्तरश्लोके ज्ञानिस्फूर्तिप्राप्तस्तिरोभूतसर्वधर्मोऽक्षरो वर्ण्यते। अस्मिंश्च भगवद्धामरूपोक्षरो वर्ण्यते। अत एव 'लोककल्प' इति पदम्। तेनाप्राकृतिकः सन्निवेशस्तु तत्रास्त्वेवेति सूच्यते। तथाचायमर्थोऽस्य—यद्धामवर्णननिमित्तं मनो वाचश्च न साहसं कर्तुं शक्नुवन्ति तत्त्रिगुणात्मकं च नास्ति। तत्रत्यदेहादिषु महत्तत्वप्राणादयो लौकिका न सन्ति। न च तच्छिखरप्राकारभित्तिकुट्टिमादीनां लोककल्पः सन्निवेश इति। अत एव सप्तमे युधिष्ठिरेण पृष्टम्। देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्। देहसंबन्धसंबद्धमेतदाख्यातुमर्हसि। अत्राप्राकृतदेहादिमत्त्वम्।

न स्वप्न जाग्रन्न च तत् सुषुप्तं
न खं जलं भूरनिलोऽग्निरर्कः ।
संसुप्तवच्छून्यवदप्रतर्क्यं
तन्मूलभूतं पदमामनन्ति ॥ ४७ ॥

इति भागवते स्कन्धे द्वादशे वर्ण्यतेऽक्षरम् ।
तदेव परमं धाम गीतासु बहुरूपितम् ॥ ४८ ॥

'यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण प्रवक्ष्ये' ॥ ४९ ॥

इत्यादिनाऽऽह प्रणवाभिधेयं स्वपदं हरिः ।
यदक्षरं तदेवैतत् कठवल्लीषु पठ्यते ॥ ५० ॥

'सर्वे वेदा यत् पदमामनन्ति
तपांसि सर्वाणि च यद्वदन्ति ॥
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्' ॥ ५१ ॥

---

१—पदं पदनीयं प्राप्यमिति यावत्। २—यत् यत्प्राप्त्यर्थानि। तपांसीत्यर्थः। ३—तुभ्यं नचिकेतसे। ४—भगवद्धाम। ५—भगवद्धाम्नः प्रणववाच्यत्वं भागवतद्वादशस्कन्धेऽपि 'स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मन' इति ।

एतद्ध्येवाक्षरं[1] ब्रह्म एतदेवाक्षरं परम्[2] ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥५२॥

एतदालम्बनं[3] श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके[4] महीयते ॥ ५३ ॥

इति वल्ल्यां द्वितीयस्यां तृतीयस्या च भण्यते ।
'यः सेतुरीजानानामक्षरं ब्रह्म यत् परम्' ॥ ५४ ॥

इत्यक्षरं निरूप्याऽस्य प्राप्त्यप्राप्त्योश्च कारणे[5] ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ५५ ॥

इत्यन्तेनोदिते[6], तस्मादुत्तमोऽग्रे परः श्रुतः ।
महतः परमव्यक्तमव्यक्तात्[7] पुरुषः परः ॥ ५६ ॥

पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः ।
इति श्रुत्युदितो देवो गीतासु बहुवर्णितः ॥ ५७ ॥

मुण्डकोपनिषद्युक्त्वाऽक्षरं[8] प्रोक्तः परः पुमान् ॥ ५८॥

---

१—ॐकारवाच्यम्। २—क्षरजगदपेक्षया श्रेष्ठम्। ३—भगवदालयः। ४—भगवत्तत्वज्ञजनेषु । यद्वा ब्रह्माख्ये लोके। किंवा परब्रह्मणो लोके । ५—विज्ञानाऽविज्ञानादिरूपे। ६—कथिते। ७—अक्षरात्। ८—'अक्षरात्परतःपर' इत्यादौ। यत्तु प्रधानमक्षरवाच्यं वदन्ति केचित्तन्न, 'अक्षरमम्बरान्तधृते'रिति सूत्रे सूत्रकारेण तन्मतस्य निरस्तत्वात्।

'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' ।
'दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याऽभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् [1]परतः परः' ॥ ५९ ॥

इत्यादिना विविच्योक्तौ स्पष्टं [2]तत्र पराक्षरौ ।
एकस्यैवैच्छिकाद्भेदाच्छुद्धाद्वैतं च दर्शितम् ॥ ६० ॥

पराक्षरविवेकोऽयं कार्यादेस्तारतम्यतः ।
कठमुण्डकमाण्डूक्यबृहदारण्यकादिषु ॥ ६१ ॥

छान्दोग्यकौषीतकीशावास्यतित्तिरिषु स्फुटः ।
आम्नायते तैत्तिरीये प्रश्ने नारायणाभिधे ॥ ६२ ॥

'स ब्रह्मा स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्' ।
[3]परं ब्रह्म[4] परं धाम पवित्रं परमं भवान् ।
[5]पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ ६३ ॥

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ ६४ ॥

---

१—क्षरात्परस्मात् । २—मुण्डके । ३—पुरुषोत्तमम् । ४—अक्षरं च भवानेवेत्यर्थः । ५—अन्तर्याम्यादिः

तथा—त्वमक्षरं[1] सदसत् तत्परं यत् ॥
एवं वेदैरभेदोऽस्य[2] शुद्धः कृष्णेन कथ्यते ।
स एवाक्षरसंज्ञोऽत एकांशे[3] प्रतिपादितः[4] ॥ ६५ ॥
तस्मादेकोऽहमित्यादि नैव किंचन बाध्यते ।
बहुत्वन्तु तिरोभावादिष्टं नासीत् पुरा हि तत्[5] ॥ ६६ ॥
तत्राधिदैविकं[6] रूपं सदानन्दः परः पुमान्[7] ।
अध्यात्ममक्षरं धाम[8] प्रपंचस्त्वाधिभौतिकम् ॥ ६७ ॥
रूपत्रयविवेकाय दृष्टान्तः सरितो[9] दिवः ।
श्रीमद्धुताशनाचार्यैर्मुक्तावल्यां निदर्शितः ॥ ६८ ॥
प्रथमं[10] वारि सामान्यं तथा तीर्थात्मकं परम्[11] ।
देव्याख्यं च तृतीयं[12] स्यादधिभूतादि तत्क्रमात् ॥ ६९ ॥

---

१—सदसत्, क्षरं, अक्षरं, तत्परं च त्वमेवेत्यर्थः । २—अक्षरस्य पुरुषोत्तमेन सहाभेद इत्यर्थः । ३—पुरुषोत्तमः । ४—विष्णुपुराणादौ । ५—ननु भवतु तयोर्द्वयोरैक्यं तथापि तु पुरुषोत्तमोऽक्षरश्चेति भेदोऽपि स्वीकृत एव । तथा च भेदाऽभेदावेव, न शुद्धाद्वैतं तत्राह—**बहुत्वं तु तिरोभावा**'दित्यादि । तत्—बहुत्वम् । अयमाशयः । भेदो हि नामाऽन्योन्यस्मिन्नन्योन्याभावः । स्वरूपपरिवर्तनं वा । तदिह तयोर्द्वयोरपि न वर्तते । द्वयोः सच्चिदानंदरूपत्वात् । यत्पुनर्बहुत्वं तत्तु किंचिदानंदांशतिरोभावादिष्टमेव । 'एकोऽहं बहुस्यामिति' श्रुतेः । ६—त्रिविधरूपेषु । ७—कृष्णशब्दार्थं वक्तुं द्वयोरेवोक्तिः। ८—रूपविशेषणत्वान्नपुंस्त्वम् ।९—दिवःसरितो गङ्गायाः । १०—आधिभौतिकम् । ११—आध्यात्मिकम् । १२—आधिदैविकम् ।

वृष्ट्यातपेषु यद्वृद्धिक्षययुक् चोपयुज्यते ।
व्यवहारेषु सर्वेषु तद्भौतिकजलं मतम् ॥ ७० ॥

[1]यच्च माहात्म्यसंयुक्तं स्नानस्पर्शादिकर्मसु ।
यद्विहारास्पदं देव्यास्तद्[2]रूपं च निरूप्यते ॥ ७१ ॥

[3]यात्रिकैः पूज्यते देव्यभेदबुद्ध्या फलेप्सुभिः ।
मार्यादिकेन विधिना[4] यत्तेभ्यो भोगमोक्षदम् ॥ ७२ ॥

रूपं तीर्थात्मकं तस्यास्तदाध्यात्मिकमुच्यते ।
तत्र[5] स्थिता मूर्त्तिमती देवी स्यादाधिदैविकी ॥ ७३ ॥

सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां
कलशजलजहस्तां मौक्तिकैर्भूषितांगीम् ।
अभयवरदपाणिं सेन्दुकोटीरजूटां
वसितसितदुकूलां जाह्नवीं तां नमामि ॥ ७४ ॥

[6]शरच्चन्द्रश्वेतां शशिशकलश्वेतालमुकुटां[7]
करैः कुम्भाम्भोजे वरभयनिरासौ च दधतीम् ।
सुधाधाराकाराभरणवसनां शुभ्रमकर-
स्थितां त्वां ये ध्यायन्त्युदयति न तेषां परिभवः ७५॥

---

१—सार्धद्वयपद्ययोरेकोऽन्वयः । २—देवीरूपम् । ३—यत्र तीर्थरूप इति शेषः । लोकशास्त्राभ्यां दृश्यते वर्ण्यते च । ४—निरतिशयप्रेमशून्येन तीर्थांगपूजाप्रकारेण । ५—तीर्थे । ६—गङ्गालहर्याम् । ७—छन्दोभङ्गभिया 'शोभाले'ति परिष्कार्यम् ।

इत्याद्युक्तस्वरूपा या कंचिद्भक्त्यैव दृश्यते।
सुलभा नाखिलानां सेतिफलं तीर्थरूपतः ॥ ७६ ॥
आविर्भावी तिरोभावी शोकमोहादिषूदितः।
षड्भाववान् प्रपञ्चस्तु रूपं स्यादाधिभौतिकम् ॥ ७७ ॥
यो गीतबहुमाहात्म्यः सकामैर्मोक्षकामुकैः।
सेव्यमानश्च फलदो धामाध्यात्मिकमक्षरः ॥ ७८ ॥
पुरुषोत्तम आनन्दाकारः स्यादाधिदैविकः।
भक्तिमात्रेण लभ्यः[2] स भोगमोक्षौ ततोऽक्षरात् ॥७९॥
श्रद्धालुः सलिलं तीर्थं पश्यन्कल्याणवान्भवेत्।
तथाऽक्षरात्मकं पश्यन् विश्वं ज्ञानी विमुच्यते ॥८० ॥
परं पदं वैष्णवमामनन्ति त-
द्यन्नेति नेतीत्य[3]तदुत्सिसृक्षवः।
विसृज्य दौरात्म्यमनन्य[4]सौहृदा
हृदोप[5]गुह्याव[6]सितं समाहितैः॥ ८१ ॥
इति भागवते, विष्णुपुराणे प्रथमांशके।
'[7]अक्षरात्मकमेतद्धी'त्युक्तमन्यत्र च स्फुटम् ॥ ८२ ॥
अधिभूतादिभावोऽयमित्थं गीतासु रूप्यते।
अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ॥ ८३ ॥

---

१–प्रवाहविशेष एव। २–'भक्त्या लभ्यस्त्वनन्यये'त्यादिवाक्यैः। ३–तद्ब्रह्म ततोऽन्यदतत्। ४–अनन्यमैकान्तिकं प्रेम येषां ते। ५–'यो वेद निहितं गुहाया' मितिश्रुतेरतुल्यार्थमिदम्। ६–निश्चितम्। अवबद्धमात्मतया गृहीतं वा। ७–विष्णुपुराणे।

भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ।
अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ॥ ८४ ॥
यो निर्गुणोऽपि निर्गुणधामाऽपि
जगत् ससर्ज सगुणमिदम् ।
बृहदा[1]त्मैक्यादगुणान्कुर्वाणो
विजयते वरणसुलभ[2]ः ॥ ८५ ॥

इति श्रीमद्वल्लभाचार्यमतवर्ति श्रीव्रजवल्लभचरणानुचरपंचनदी-
घनश्यामभट्टात्मजश्रीगोवर्द्धनशीघ्रकवेः कृतौ वेदान्त-
चिन्तामणौ शुद्धाद्वैतविशेषविचारो नाम
त्रयोदशं प्रकरणम् ॥ १३ ॥

## अथ प्रकृतिपुरुषदिग्दर्शनपूर्वकभगवद्धामोदा-हरणं नाम चतुर्दशं प्रकरणम् ॥

नमोऽस्तु ज्ञा[3]न्यलभ्याय भ[4]क्त्यैकसुलभाय यः ।
प्रकृतिं पुरुषं कृत्वा निर्माति सगुणं जगत् ॥ १ ॥

---

१—अक्षरब्रह्मणा सह जीवैक्यसंपादनात् । २—भगवता जीवस्य स्वीयत्वेनाङ्गीकारो वरणम् । साधनान्तरालभ्यत्वोक्तिपूर्वकं 'यमेवैष वृणुत' इति वरणलभ्यत्वश्रवणात् । ३—'अविज्ञातं विजानतां' 'क्लिश्यन्ति ये केवलबोधलब्धये' इत्यादिश्रुतिपुराणवाक्यैर्भक्तिरहितशुष्कज्ञानिभिः पुरुषोत्तमो न लभ्यस्तेषामक्षर एव लयः । ४—'भक्त्याऽहमेकया ग्राह्य' इत्यादिवाक्यैः ।

सत्वं रजस्तम इति त्रिभिर्व्याप्तं जगद्गुणैः ।
जीवाश्च त्रिविधा देवास्त्रयस्तत्तन्नियामकाः[1] ॥ २ ॥
ननु स्यान्निर्गुणं ब्रह्म स्वयं धामात्मकं तथा ।
ब्रह्माभिन्नो ब्रह्मकार्यः प्रपञ्चः सगुणः कुतः ॥ ३ ॥
अत्रोच्यते गुणा मायाकाया व्यामोहिका हि सा ।
जीवानां तादृशीर्वृत्तीरात्मकार्यैः करोति तैः[2] ॥ ४ ॥
मायायां ते विलीयन्ते कार्यत्वात्प्रलये गुणाः ।
शान्ताविरतकार्यत्वात् सुप्तवत्तत्र[3] तिष्ठति ॥ ५ ॥
सर्गमिच्छति चेद्देवः पुरुषं कुरुतेऽक्षरात् ।
चिद्रूपं तर्ह्यचिद्रूपां जडां च प्रकृतिं पुनः ॥ ६ ॥
'आसीज्ज्ञानमथो ह्यर्थ एकमेवाविकल्पितम् ।
यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे ॥ ७ ॥
तन्मायाफलरूपेण केवलं निर्विकल्पितम् ।
वाङ्मनोगोचरातीतं द्विधा समभवद्बृहत् ॥ ८ ॥

---

१–ब्रह्मविष्णुशिवाः। २–गुणैः। ३–ब्रह्मणि । ४–सा मायेति शेषः। ५–अयं कृत्स्नोऽपि द्रष्टृदृश्यादिरूपः पदार्थः प्रपञ्च इति यावत् । आदौ सर्वतः पूर्वं युगेभ्यः पूर्वम् । किंवा यदा विवेकनिपुणा जना भवन्ति तदापि नामरूपादिविकल्परहितमेकं ज्ञानमेवासीत् । अक्षररूपमित्यर्थः । तदेवाक्षरज्ञानं वाङ्मनसातीतं निर्विकल्पितमपि प्रकृतिपुरुषरूपेण केवलं (स्वरूपेणैवेत्यर्थः) द्विप्रकारकमभूत् । तेन मायाया अपि ब्रह्मात्मकत्वमुक्तं भवति नतु मिथ्यात्वम् । तयोरेकतरः पदार्थः प्रकृतिः कार्यकारणमयी कथ्यते । अन्यश्च भागः पुरुष उच्यते ।

तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ।
ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते' ॥ ९ ॥
इति भागवते प्राह तदेव भगवान् स्वयम् ।
तिरोहितचिदानन्दा सदंशात् प्रकृतिर्जडा, ॥ १० ॥
'[1]सत्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः' ।
'[2]प्रकृतिर्गुणसाम्यं स्या'दिति भागवतोक्तितः ॥ ११ ॥
समग्राणां समानानां त्रिगुणानामबाधतः ।
ऐक्यं तच्छक्तिमायात्मा जडा प्रकृतिरुच्यते ॥ १२ ॥
'प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ।
[3]सतोऽभिव्यञ्जकः कालो ब्रह्म [4]तत्रितयं त्वहम्'॥१३॥
[5]तद्द्वाराऽऽविष्कृतं भूता[6]दिकं तत्सगुणं मतम् ।
ततो [7]महदहं तस्मादिति सांख्ये क्रमः स्मृत[8]ः ॥ १४ ॥
प्रकृत्या निर्मितत्वेन प्राकृतत्वाद्गुणान्वयात् ।
धर्मान्तरतिरोभावाज्जडमब्रह्म भासते ॥ १५ ॥

---

१—श्रीभा. । २—श्रीभा. । ३—सतो नित्यस्यैवाऽविर्भावकः ( पुरुषस्यैवाऽपरं रूपं ) सृष्टिकालः । ४—तत्रितयं कालप्रकृतिपुरुषास्त्रयोऽप्यहं ब्रह्म । भगवद्रूपाएवेत्यर्थः । तेन ब्रह्मणो जगदभिन्ननिमित्तोपादानता न हीनेतिभावः । ५—प्रकृतिद्वारा । ६—भूतादिकम् । देहेन्द्रियतन्मात्रादिकमित्यर्थः । आकाशादिकं च । ७—प्रकृतेर्महत्तत्वं ( समष्टिबुद्धिः ) ततस्त्रयोऽप्यहंकारास्तेभ्यश्च क्रमाद्देवेन्द्रियभूतानीति क्रमो ज्ञेयः । ८—तेन स्मार्तोऽयं क्रमो न तु श्रौतः । 'इतरेषाञ्चाऽनुपलब्धे'रित्यत्र तन्निषेधात् ( अ. २ पा. १ सू. २ ) ।

तस्या अप्यंशभूतत्वाज्जडे ब्रह्मसमन्वयम् ।
तन्मूलके[1] सदंशेन वक्ति 'तत्तु समन्वयात्' ॥ १६ ॥

जीवास्तु निर्गुणाः स्वांशा आवृताः प्राकृतैर्गुणैः ।
सृष्ट्यारम्भे नारदीये पञ्चरात्रे स्फुटं तथा ॥ १७ ॥

'त्रिविधा[2] जीवसंघास्तु देवमानुषदानवाः ।
तत्र देवा मुक्तियोग्या मानवेषूत्तमा अपि ॥ १८ ॥

मध्यमा मानुषा ये तु सृतियोग्याः[3] सदैव हि ।
अधमा निरयायैव दानवास्तु तमोलयाः ॥ १९ ॥

श्रुतावपि[4] 'त्रयः प्राजापत्या' इति तदुच्यते ।
तदन्तःकरणादीनि[5] तादृशानि भवन्ति हि ॥ २० ॥

जीवाः कर्माणि कुर्वन्ति स्वभावानुगुणान्यतः ।
फलं वाञ्छन्ति तादृक्षं प्राप्य सुख्यन्ति तत्र[6] ते ॥२१॥

सत्वाद्युपाधिमादाय विष्णुर्ब्रह्मा शिवस्तथा ।
तत्तन्नियमनाया[7]ऽभूत् स्थित्यादिकृतये पृथक् ॥ २२ ॥

---

१—प्रकृतिमूलके जडमात्रे । सदंशेन अस्तीतिरूपेण ब्रह्मणः सर्वत्रान्वयोऽस्तीति ज्ञाप्यते । २—सात्विकराजसतामसाः । ते च क्रमेण देवमनुष्यासुराः । दैत्यदानवराक्षसाश्चासुरभेदाः । ३—मध्यलोकभ्रमणधर्माणः । ४—सर्वनिर्णयावरणभङ्गोक्तायाम् । ५—सात्विकादीनि यथायोग्यानीत्यर्थः । ६—स्वगुणकर्मानुरूपफलेषु । ७—सात्विकादिपृथक्पृथक्स्वभावस्य जीवसंघस्य तत्तदनुरूपफलादिदानायेति यावत् ।

सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तै-
  र्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरञ्चिहरेति संज्ञाः
  श्रेयांसि तत्र खलु सत्वतनोर्नृणां स्युः ॥ २३ ॥

चिच्छक्तिः पुरुषो नारायणो ब्रह्मा ततोऽभवत् ।
ब्रह्मादिद्वारकः सर्गः पुराणादौ परिस्फुटः ॥ २४ ॥

'जगृहे पौरुषं रूपं भगवान् महदादिभिः ।
सम्भूतं षोडशकलमादौ लोकसिसृक्षया ॥ २५ ॥

यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः ।
नाभिह्रदाम्बुजादासीद्ब्रह्मा विश्वसृजां पतिः ॥ २६ ॥

गुणा विलीय जायन्ते शून्यवत् प्रकृतौ लये ।
प्रकृतिर्लीयतेऽव्यक्ते पुरुषश्च तथा स्मृतिः ॥ २७ ॥

'प्रकृतिः पुरुषश्चोभौ लीयेते परमात्मनि' ।
'कदाचित् पुरुषद्वारे'त्युक्तः सर्गोऽयमीरितः ॥ २८ ॥

ननु लीना गुणा यत्र लीयते प्रकृतिर्यदि ।
साऽक्षरे सगुणं धाम भवेदेवेति चेन्न हि ॥ २९ ॥

---

१–श्रीभा. १–२–२३ । २–श्रीभा.–१–३–१ । ३–अक्षरे । ४–निबन्धस्थोऽयं श्लोकपादः । तत्र हि षोढा दर्शितः सर्गः । तेषु प्रकृतिपुरुषद्वारोऽप्येकः । ५–यस्यां प्रकृतौ । ६–प्रकृतेर्गुणात्मकत्वात्तस्याश्चाक्षरे लीनत्वादक्षरे धाम्न्यपि सगुणत्वं दुर्निवारमित्याशंक्य,–न हीत्यनेन वारयति ।

जगतः सगुणत्वं तु गुणबन्धोऽनुभूयते ।
न तस्य वश्यमायस्य बन्धगन्धः स्वशक्तिजैः[१] ॥ ३० ॥

'बद्धो[२] मुक्त इति व्याख्या गुणतो मे न वस्तुतः ।
गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम्' ॥३१॥

सृष्टावेवोद्भवन्त्येते प्राकृताः सति[३] सल्लयात् ।
साऽप्यनुद्भूतरूपा चेत्तत्कार्याणि[४] कुतस्तराम् ॥ ३२ ॥

किञ्च तत्तद्वृत्तिरूपाः सम्भवन्त्यधुनैव ते ।
जीवेष्वेव विमूढेषु क्रीडार्थं[५] लिंगवत्सु[६] च ॥ ३३ ॥

न हि ज्ञानघने नाना युज्यन्ते वृत्तयः परे ।
गुणानां वृत्तिरूपत्वं सांख्यविद्भिर्विविच्यते ॥ ३४ ॥

---

१—गुणैरिति शेषः । २—श्रीभा. ११ स्कं. । अयमाशयः—व्याख्या नाम विशेषेण सृष्टिरूपेण हेतुनाऽऽख्या। तेन सृष्टावेव गुणहेतुकी बद्धमुक्ताऽऽख्या न पुनः सृष्टेराद्यन्तयोरित्यर्थः । किञ्च लये हि विपर्ययेण तत्तत्स्वरूपापत्त्या तज्जननी प्रकृतिरेवाक्षररूपतामाप्नोति कुतस्तरां तदा गुणानामात्मरूपेणास्तित्वम् । कुतस्तत्कृतं चाक्षरे सगुणत्वम् । ३—सदंशे जडवाच्यस्य सतो लयात् । ४—गुणादीनि । ५—क्रीडार्थभेदार्थमित्यर्थः । ६—इन्द्रियमनस्तन्मात्रारूपं लिङ्गशरीरं, तद्वत्सु ।

'प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ३५॥
सत्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्ति' ॥ ३६ ॥
तस्मादचिन्त्यमहिमा भगवान् पुरुषोत्तमः ।
विरुद्धधर्माधारेऽस्मिन् युक्तं सर्वमलौकिके ॥ ३७ ॥
'स एवेदं ससर्जाग्रे भगवानात्ममायया ।
सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः ॥ ३८ ॥
तया विलसितेष्वेषु गुणेषु गुणवानिव ।
अन्तः प्रविष्ट आभाति विज्ञानेव विजृम्भितः ॥३९॥
यथा ह्यवहितो वह्निर्दारुष्वेकः स्वयोनिषु ।
नानेव भाति विश्वात्मा भूतेषु च तथा पुमान् ॥४०॥
असौ गुणमयैर्भावैर्भूतसूक्ष्मेंद्रियात्मभिः ।
स्वनिर्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान् ॥ ४१ ॥
भावयत्येष सत्वेन लोकान् वै लोकभावनः ।
लीलावतारानुरतो देवतिर्यङ्नरादिषु ॥ ४२ ॥

---

१—ईश्वरकृष्णविरचितार्याणां मध्ये तद्द्वयमिदम् । २—आच्छादनम् । ३—तैलवर्त्यादीनां पञ्चमहाभूतानाञ्च परस्परविरुद्धानामपि यथा दीपदेहाद्येककार्यकारित्वं तथैवैतेषां सत्वादिगुणानामप्यविरोध इत्यन्यत्र भूमा विस्तरः । ४—आच्छादकम् । ५—पुरुषोत्तमे । ६—श्रीभा. १—२—३० ।—एवं पञ्चश्लोकी श्रीभागवतस्थेयम् ।

इत्युक्तं सर्वमुदितं श्रीमद्भागवतादिषु ।
श्रुतिप्रसिद्धं तत्सिद्धं शुद्धमद्वैतमुज्ज्वलम् ॥ ४३ ॥
चतुष्टये प्रमाणानामविरोधाद्विचारिते ।
श्रीमदाचार्यसिद्धान्तान्न वर्णोऽप्यन्यथा भवेत् ॥ ४४ ॥
सर्वप्रमाणाविषयः सर्वशक्तिः स्वयं प्रभुः ।
पूर्णानन्दो रसात्मा[1]ऽसौ क्रीडत्यध्यात्मधामनि ॥ ४५ ॥
यादृशं धाम तत्तत्र यथा क्रीडा यथा हरिः ।
लीलार्थं तस्य रूपाणि यथा नाना तथाऽखिलम् ४६ ॥
बृहद्वामनसंज्ञे तत् पुराणे खिल्य उत्तरे ।
ब्रह्मभृग्वादिसंवादे स्पष्टं तदिह[2] लिख्यते ॥ ४७ ॥
'षष्ठिवर्षसहस्राणि मया तप्तं तपः पुरा ।
नन्दगोपव्रजस्त्रीणां पादरेणूपलब्धये ॥ ४८ ॥
तथापि न मया प्राप्तास्तासां वै पादरेणवः ।
श्रुत्वैतद्ब्रह्मणो वाक्यं भृगुः प्राहाऽथ सादरम् ॥ ४९ ॥
वैष्णवानां पादरजो गृह्यते तद्विधैरपि ।
सन्ति ते बहवो लोके वैष्णवा नारदादयः ॥ ५० ॥
तेषां विहाय गोपीनां पादरेणुस्त्वयाऽपि यत् ।
गृह्यते संशयो मेऽत्र को हेतुस्तद्वद प्रभो ॥ ५१ ॥

---

१—'रसो वै सः' ब्रह्मवल्लीश्रुतिः । २—पुराणस्थमाख्यानं प्रमाणत्वेन दीयत इत्यर्थः ।

ततो ब्रह्मा भृगुं प्राह चिन्तयित्वा पुरातनीम् ।
कथां सर्वश्रुतीनां च रहस्यं परमाद्भुतम् ॥ ५२ ॥

ब्रह्मोवाच ।

न[1] स्त्रियो व्रजसुन्दर्यः पुत्र ताः श्रुतयः किल ।
नाहं शिवश्च शेषश्च श्रीश्च ताभिः समाः क्वचित् ५३॥
प्राकृते[2] प्रलये प्राप्ते व्यक्ते[3]ऽव्यक्तं[4] गते[5] पुरा ।
शिष्टे ब्रह्मणि चिन्मात्रे कालमायाद्य[6]गोचरे ॥ ५४ ॥
ब्रह्मानन्दमयो लोको व्यापिवैकुण्ठसंज्ञकः ।
निर्गुणोऽनाद्यनन्तश्च वर्त्तते केवलेऽक्षरे ॥ ५५ ॥
अक्षरं ब्रह्म परमं वेदानां स्थानमुत्तमम् ।
गोलोकवासी तत्र[7]स्थैः स्तुतो वेदा[8]त्परात्परः ॥ ५६ ॥
चिरं स्तुत्या ततस्तुष्टः परोक्षं प्राह तान्[9] गिरा ।
तुष्टोऽस्मि ब्रूत भो प्राज्ञा वरं यन्मनसीप्सितम् ॥५७॥
नारायणादिरूपाणि ज्ञातान्यस्माभिरच्युत ।
सगुणं ब्रह्म सर्वे[10]षां वस्तु[11]बुद्धिर्न तेषु नः ॥ ५८ ॥

---

१—यथा लौकिकाः स्त्रियस्तथा व्रजसुन्दर्यो नेति लौकिकत्वनिषेध एव तात्पर्यम् । न तु स्त्रीत्वस्य । २—ब्रह्माऽऽयुःसमाप्तिरूपे । ३—आविर्भावं गते जगति । ४—अक्षरम् । ५—प्रविष्टे । ६—तिगेऽक्षर इति वा पाठः । ७—अक्षरे स्थितैः । ८—जगदपेक्षयाऽऽध्यात्मिकाक्षररूपात्परः । आधिदैविकः पुरुषोत्तमः श्रीकृष्ण इत्यर्थः । ९—वेदान् । १०—अशेषाणां नोऽस्माकमित्यन्वयः । ११—निर्गलितवस्तुत्वबुद्धिः ।

ब्रह्मेति पठ्यतेऽस्माभिर्यद्रूपं निर्गुणं परम् ।
वाङ्मनोगोचरातीतं ततो न ज्ञायते तु तत् ॥ ५९ ॥
आनन्दमात्रमिति यद्वदन्तीह पुराविदः ।
तद्रूपं दर्शयास्माकं यदि देयो वरो हि नः ॥ ६० ॥
श्रुत्वैतद्दर्शयामास स्वं लोकं प्रकृतेः परम् ।
केवलानुभवानन्दमात्रमक्षरमध्यगम् ॥ ६१ ॥
यत्र वृन्दावनं नाम वनं कामदुघैर्द्रुमैः ।
मनोरमनिकुञ्जाढ्यं सर्वर्तुसुखसंयुतम् ॥ ६२ ॥
यत्र गोवर्द्धनो नाम[1] सुनिर्झरदरीयुतः ।
रत्नधातुमयः श्रीमान् सुपक्षिगणसंकुलः ॥ ६३ ॥
यत्र निर्मलपानीया कालिन्दी सरितां वरा ।
रत्नबद्धोभयतटी हंसपद्मादिसंकुला ॥ ६४ ॥
[3]शश्वद्रासरसोन्मत्तं यत्र गोपीकद[4]म्बकम् ।
लसत्कद[5]म्बमध्यस्थः किशोराकृतिरच्युतः ॥ ६५ ॥
दर्शयित्वेति च प्राह ब्रूत किं करवाणि वः ।
दृष्टो मदीयो लोकोऽयं यतो नास्ति परं वरम् ॥ ६६ ॥
[6]कोटिकन्दर्पलावण्ये त्वयि दृष्टे मनांसि नः ।
कामिनीभावमासाद्य स्मरक्षुब्धान्यसंशयम् ॥ ६७ ॥

---

१—गिरिरिति शेषः । २—सुपदं काकपेयत्वादिनिवृत्तये । ३—नानेत्यपि पाठः । ४—कदम्बः समूहः । ५—तत्कदम्बकमध्येति पाठो वा । तेन गोपीसमूहस्थित इत्यर्थः । ६—कन्दर्पकोटीत्यपि पाठः ।

यथा त्वल्लोकवासिन्यः कामं[1] तत्वेन गोपिकाः ।
भजन्ति रमणं मत्वा चिकीर्षाऽजनि नस्तथा ॥ ६८ ॥
दुर्लभो दुर्घटश्चैव युष्माकं सुमनोरथः ।
मयानुमोदितः सम्यक् सत्यो भवितुमर्हति ॥ ६९ ॥
आगामिनि विरञ्चौ तु जाते सृष्ट्यर्थमुद्यते ।
कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ ॥ ७० ॥
पृथिव्या भारते क्षेत्रे माथुरे मम मण्डले ।
वृन्दावने भविष्यामि प्रेयान् वो रासमण्डले ॥ ७१ ॥
जारधर्मेण सुस्नेहं[2] सुदृढं सर्वतोऽधिकम् ।
मयि संप्राप्य सर्वेऽपि कृतकृत्या भविष्यथ ॥ ७२ ॥

ब्रह्मोवाच ।

श्रुत्वैतच्चिन्तयन्त्यस्ता रूपं भगवतश्चिरम् ।
उक्तकालं समासाद्य गोप्यो भूत्वा हरिं गताः ॥ ७३ ॥
स्त्रियो वा पुरुषाश्चापि तद्भावेनैव केशवम् ।
हृदि कृत्वा गतिं यान्ति श्रुतीनां[3] नाऽत्र संशयः ॥७४॥
तासां पादरजः स्तुत्यं नित्यं वृन्दावने भुवि ।
तत्प्राप्य तत्कामनया[4] यान्त्यहो गोपिकागतिम् ॥ ७५ ॥

---

१—यथेच्छम् । २—सुस्नेहादिपदैः 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्ति'रित्यादिपञ्चरात्रवचनं स्मार्यते । ३—श्रुतिरूपादिगोपीनाम् । ४—पुरुषोत्तमप्राप्तिकामनया ।

नन्दगोपव्रजस्त्रीणामतः पादरजो मया ।
वाञ्छितं पुत्रकाः सम्यक् यद्धि ताः श्रुतयो मताः७६
श्रुत्वैतदृषयो वाक्यं ब्रह्मणः परमेष्ठिनः ।
सर्वात्मना प्रपन्नास्ते श्रीगोपीजनवल्लभम् ॥ ७७ ॥
इत्युक्तमुत्तरे खिल्ये बृहद्वामनसंज्ञके ।
प्रभुपा४दादिभिरिदं संगृहीतं सनिर्णयम् ॥ ७८ ॥
ऋगादीनामुपनिषत्सु पृथङ्नामपूर्वकम् ।
तत्र५त्यं वर्ण्यते सर्वं ताद्रूप्यादभिदोदिता ॥ ७९ ॥
भाष्यादौ श्रीमदाचार्यैर्दर्शितं प्रभुभिस्तथा ।
तन्नित्यलीलावादादावन्यत्रान्यैस्तदीक्ष्यताम् ॥ ८० ॥
तद्विष्णोः परमं पदं सदा पश्यंति सूरयः ।
दिवीव चक्षुराततम् ॥
ऋग्भिर्निरूपिते धाम्न्यात्माभिन्नेऽचिन्त्यधर्मवान् ।
सर्वात्मकः सर्वलीलो नित्यभक्तैर्निजात्मभिः ॥ ८१ ॥
अखण्डः पूर्ण एवासौ रमते स समं सदा ।
भक्त्येकलभ्यो भगवान् नान्यथा दृश्यते परः ॥८२॥
इत्यवश्यं सेवनीयः परमानन्दसिद्धये ।
स्वाभाविककृपाशक्तिर्जीवैः सेवार्थनिर्मितैः ॥ ८३ ॥

---

४—अयं बृहद्वामनभागो विद्वन्मण्डने श्रीप्रभुचरणैः संगृहीतः । आदिपदेन च बहिर्मुखध्वंसे गोपालभट्टैश्चेति द्योत्यते । ५—भगवद्धामस्थवृत्तमित्यर्थः । तत्रत्यवस्तूनां भगवद्रूपत्वात् ।

यत्तेनोद्गमिता दैवाः सेवनायैव चेतनाः ।
'दासभूतो हरेरेवे'ति पाद्मे यज्जीवलक्षणम् ॥ ८४ ॥

जीवाः स्वांशा यतः सृष्टा मोक्षेऽप्यक्षररूपिणः ।
अतोऽपि भजनं युक्तं 'यो यदंशः स तं भजेत्' ॥८५॥

शक्तिगणैरममाणं तनुवित्तजभजनजातपरभक्त्या ।
सेवध्वं संसारं भित्त्वा ब्रह्मैक्यभावना भूयः ॥ ८६ ॥

इति श्रीमद्वल्लभाचार्य्यमतवर्त्ति श्रीव्रजवल्लभचरणानुचरपञ्चनदी-घनश्यामभट्टात्मजश्रीगोवर्द्धनशीघ्रकवेः कृतौ वेदान्ताचिंतामणौ प्रकृतिपुरुषदिग्दर्शनपूर्वकभगवद्धामोदाहरणं नाम चतुर्दशं प्रकरणम् ॥ १४ ॥

## अथ साधनफलादिसर्वविवेको नाम

## पञ्चदशं प्रकरणम् ।

सर्वात्मार्पणतः सेवारसैर्मुक्त्यधिकैः कृतः ।
स्वाचार्यैः सुलभो यः स श्रीकृष्णः शरणं मम ॥ १ ॥
ननु ता[2] गोपिका नित्या नित्यं क्रीडादिकं यदि ।
शुद्धं द्वैतमिदं जातं शुद्धाद्वैतं कुतः पुनः ॥ २ ॥

१—वाक्यमिदम् । २—बृहद्वामनायुक्ताः ।

न शंकनीयमित्येवं शक्तिशक्तिमतोर्हतः[1]।
सूत्रेषु श्रुतितो भेदः, सुबोधिन्यां[2] न्यरूपयन् ॥ ३ ॥
आधिदैविकशक्तित्वं तासां कृष्णमुखान्वयः।
वासुदेवोपनिषदि[3] श्रूयते शक्तिरूपता ॥ ४ ॥

गोप्यो नाम विष्णुपत्न्यस्तासां चन्दनमाह्लादनम्।
कश्चाह्लाद एष ब्रह्मानन्दरूपः।
काश्च विष्णुपत्न्यो गोप्यो नाम,
जगत्सृष्टिस्थित्यन्तकारिण्यः
प्रकृतिमहदहमाद्या महामायाः।
कश्च विष्णुः परब्रह्मैव विष्णुरिति।

तत्रैवाग्रे। आपो ह वा अग्रे 'आसन्नि'त्युपक्रम्य। ताश्चोपनिषद्वैवस्वतेऽन्तरे सगुणं ब्रह्म विधिनानन्दैकरूपं पुरुषोत्तमरूपेण मथुरायां वसुदेवसद्मन्याविर्भविष्यति तत्रभवत्यः सर्वलोकोत्कृष्टसौन्दर्यक्रीडाभोगं गोपिकाः स्वरूपैः परब्रह्मानन्दैकरूपं कृष्णं भजिष्यथ।

---

१—निरस्तः। २—वेणुगीतादिव्याख्याने। पादोऽयमुत्तरत्रान्वयी।
३—आथर्वणीयेयमुपनिषत्। गोपीचन्दनोपनिषदित्यपि कथ्यते।
ॐ नमस्कृत्य भगवन्तं नारदः सर्वेश्वरं वासुदेवं पप्रच्छेत्यादि।
इयं शंकराचार्याद्यनुसारिभिर्बहुभिर्व्याख्याता भागवततत्त्वभास्करादिषु सर्वसाधारणग्रन्थेषूदाहृता च।

तत्र श्लोकौ ॥

इति ब्रह्मवरं लब्ध्वा श्रुतयो ब्रह्मलोकगाः ।
कृष्णमाराधयामासुर्गोकुले धर्मसंकुले ॥
श्रीकृष्णाख्यं परब्रह्म गोपिकाः श्रुतयोऽभवन् ।
एतत्संभोगसंभूतं चन्दनं गोपिचन्दनमिति ॥
'ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः ।
व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा' ॥ ५ ॥
इति पुंशक्तिवल्लीलाशक्तिभिः सह शंसिता ।
मूर्तिमत्त्वं तु शक्तीनामप्राकृततयेच्छया ॥ ६ ॥
यथा मूर्त्तिर्न वर्णानां लौकिकानामलौकिके ।
'वेदा यथा मूर्त्तिधरास्त्रिपृष्ठे' तदिदं तथा ॥ ७ ॥
मूर्त्तयोऽक्रूरदृष्टानां शक्तीनामपि वर्णिताः ।
तर्ह्याधिदैविकीनां तु तथात्वे को नु संशयः ॥ ८ ॥
एवं परिष्वङ्गकराभिमर्श-
स्निग्धेक्षणोद्दामविलासहासैः ।
रेमे रमेशो व्रजसुन्दरीभि-
र्यथाऽर्भकः स्वप्रतिबिम्बविभ्रमः ॥ ९ ॥

---

१—श्रीभा.—स्कं.—१० पूर्वार्ध. । २—श्रीभागवतस्थोऽयमिन्द्रवज्रा-चरणः । ३—सत्यलोकादौ । ४—मूर्तिमत्त्वे । ५—श्रीभा. स्कं. १०. अ. ३३ श्लो. १७ ।

ते ते भक्तास्तदात्मानो न भिदाऽण्वपि वर्त्तते ।
इत्यभेदे क्रीडने च दृष्टान्तं[१] शुक उक्तवान् ॥ १० ॥
लीलामात्रैर्धर्मभूतैः कामादिभिरलौकिकैः ।
अबद्धस्य स्वतन्त्रस्य बाधः सर्वाश्रयस्य तैः ॥ ११ ॥
नाऽचिन्त्यस्याप्रमेयस्य शुद्धाद्वैतस्य कश्चन ।
अतो भागवतेऽप्युक्त‘मात्मारामोऽप्यरीरमत्’ ॥ १२ ॥
‘रसो वै स’ इति श्रुत्या रूपिताऽस्य रसात्मता ।
‘सर्वकामः[२] सर्वरस’ इति धर्मत्वमीर्यते ॥ १३ ॥
विरुद्धधर्माधारत्वं ब्रह्मत्वमिति लक्षणात् ।
कामादयो ज्ञानघने भूषणं न तु दूषणम् ॥ १४ ॥
शक्तिशक्तिमतोर्भेदो नैवं[३], शुद्धं तदद्वयम्[४] ।
तत्रत्येषु[५] तिरोभावो न धर्माणां तु[६] वस्तुषु ॥ १५ ॥
अनीश्वरानप्रकृष्टाँस्तिरोहितगुणान् बहून् ।
यदेच्छति प्रजायेयेति तदा कुरुते जगत् ॥ १६ ॥
ते तिरोहिततद्धर्मा बद्धाः संसारमायया[७] ।
दृढाऽहंत्वाच्छरीरेऽत्राचिराप्ते क्षणभंगुरे ॥ १७ ॥

---

१—शिशुप्रतिबिम्बदृष्टान्तम् । २—सर्वकामः सर्वगन्धः सर्वरस इति छान्दोग्ये पञ्चमप्रपाठके ( खं. १८. ) शाण्डिल्यविद्यायां द्विवारमाम्नातम् । ३—भेदस्यायं निषेधः । ४—तस्माद्भेदाभावाद्धेतोः शुद्धाद्वैतं सिद्ध्यति । ५—परधामस्थेषु लीलोपयोगिषु । ६—तत्रत्यवस्तुषु त्विलयन्त्रयात् लौकिकवस्तुव्यावृत्तिः । ७—संसारहेतुभूतया ।

नाव्येकस्यामिवारोहात् प्रपायामिव संगमात् ।
वियोक्ष्यमाणेष्वचिरान्मिलितेष्वधुनैव च ॥ १८ ॥
तेन[1] स्त्र्यादिषु सम्बन्धं[2] कल्पयित्वा च पण्यवत्[3] ।
गतागतेषु वित्तेषु ममत्वाच्चिन्तयाकुलाः ॥ १९ ॥
संसक्ता देहगेहादावकृतार्था अतर्पणाः ।
बलेन मृत्युना नीताः प्रापिता[4]ः पारवश्यतः ॥ २० ॥
पुनर्जन्म पुनः सक्तास्तत्र[5]त्येषु गृहादिषु ।
नीयमानाः पुनस्तेन[6] पापपुण्यानुरोधतः ॥ २१ ॥
आपन्ना नरकं स्वर्गं नानोद्विग्ना वृथा मुहुः ।
क्वचित्सुखं[7] क्वचिद्दुःखं क्वचिन्मोहमुपागताः ॥ २२ ॥
एवं परवशाः प्राप्ता जन्ममृत्युपरम्पराम् ।
व्यूह्यमाना इवौघेन घटीयन्त्रमिव श्रिताः ॥ २३ ॥
जीवाः क्लिश्यन्ति, दुःखस्य नाशे[8] पुनरनुद्भवे ।
तद्भक्तिरेव परमं कारणं हरितोषिणी ॥ २४ ॥
'न[9] क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे' ॥ २५ ॥

---

१—सम्बन्धद्वारभूतशरीरेण । २—पत्नीत्वपुत्रत्वादिलक्षणम् । ३—क्रय्यवस्तुष्विव गतागतेषु । ४—पुनर्जन्म प्रापिता इत्यग्रिमेणान्वयः। ५—तज्जन्मभवेषु । ६—मृत्युना । ७—सुखादीनि सत्वरजस्तमोजन्यानि, क्रमात् तेषां सुखदुःखमोहस्वभावत्वं सांख्यतत्त्वकौमुद्यादिषु प्रसिद्धम् । ८—नाशेऽनुद्भवे च कारणमित्युत्तरेणान्वेति । लौकिकोपायैर्नाशेऽपि दुःखस्य पुनरुद्भवो दृष्ट इत्युभयग्रहणम् । ९—महाभारते नामसहस्रे ।

पुरुषोत्तममापन्नो न पुनर्दुःखमाप्नुयात् ।
प्राप्यो भक्त्यैव स तथा गीताभागवतादिषु ॥ २६ ॥
'नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ २७ ॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप' ॥ २८ ॥
'भक्त्याहमेकया ग्राह्यो' 'भक्त्या लभ्यस्त्वनन्यया' ।
'भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित्' ॥२९॥
न दानं न तपो नेज्या न शौचं न व्रतानि च ।
प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम्' ॥ ३० ॥
'भक्त्या तुतोष भगवान् गजयूथपाय' ।
इत्यादौ भक्तिरेवास्य पुरुषार्थः परो मतः ।
सम्यक्त्वसिद्धये[1] ज्ञानं साधनं भक्तिसूत्रतः ॥ ३१ ॥
तत् सा[2] मुख्येतरापेक्षितत्वादित्थमुपक्रमात् ।
ब्रह्मकाण्डं[3] तु भक्तौ 'तस्यानुज्ञानाय सामान्यादि'त्यन्तम् ।
भक्तेर्ज्ञानादिशेषित्वं वक्ति सम्पूर्णमान्हिकम् ॥ ३२ ॥

---

१—भक्तेर्दार्ढ्यादिसिद्धये । २—( अ. १ सू० १० )सा मुख्येति भक्तिरेव मुख्या । इतरैर्ज्ञानादिभिः स्वाङ्गितया तस्या एवापेक्षितत्वात् । ३—ज्ञानकाण्डस्तु भक्तौ भगवत्स्वरूपानुज्ञापकतयोपयुज्यते । याग इति कर्त्तव्यताद्यनुज्ञापकतया पूर्वकाण्डमिव । ४—भक्तिमीमांसाप्रथमाध्यायस्य द्वितीयमान्हिकम् ।

पदार्थ एव न ज्ञातो यः सेव्यः स कथं भवेत् ।
भक्त्यसम्पादकं ज्ञानं केवलं तु विनिन्दितम् ॥ ३३ ॥

'श्रेयः[1]स्रुतिं भक्तिमुदस्य ते विभो
क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते
नान्यद्यथा स्थूलतुषावघातिनाम्' ॥ ३४ ॥

'नैष्[2]कर्म्यमप्यच्युतभाववर्जितं
न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे
न चार्पितं कर्म यदप्यकारणम्' ॥ ३५ ॥

'त[3]पस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाऽधिको योगी तस्माद्योगी भवार्जुन ॥३६॥
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः' ॥३७॥

तदे[4]वं कर्मिज्ञानियोगिभ्य आधिक्यश[5]ब्दात् ।
प्रश्ननिरूपणाभ्या[6]माधिक्यसिद्धेः ।
इति स्मृत्यनुसारेण शाण्डिल्यमुनिनोदि[7]तम् ।
माहात्म्यबोधके ज्ञाने भक्तिसाधनतोचिता ॥ ३८ ॥

---

१—श्रीभा. स्कं. १०. अ. १४. श्लो. ४. । २—श्रीभा. स्कं. १२. अ. १२. श्लो. ५२. । ३—श्रीमद्भगवद्गीता. अ. ६. श्लो. ४६. । ४—भक्तेर्योगाद्यपेक्षया मुख्यत्वम् । ५—शब्दस्तूक्तगीतावाक्यरूपः । ६—अर्जुनभगवत्कर्तृकाभ्याम् । ७—भक्तिमीमांसाप्रथमाध्याय उक्तम् ।

'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा' ॥३९॥
नारदीये पंचरात्रे तस्यां लक्षणमीरितम् ।
'सा[2] परा[3]नुरक्तिरीश्वरे' ।
इत्युक्तं भक्तिसूत्रेषु श्रीमद्भागवते तथा ॥ ४० ॥
'देवानां[4] गुणलिंगानामानुश्रविककर्मणाम् ।
सत्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥४१॥
अनिमित्ता भागवती भक्तिस्सिद्धेर्गरीयसी' ।
इति निष्कामनः स्नेहो भक्तिराथर्वणे तथा ॥ ४२ ॥
'भक्तिरस्य भजनं तदिहामुत्रो-
पाधिनैराश्येन मनःकल्पन'मिति ।
'चतु[5]र्विधा भजन्ते मां' चतुर्धेत्यधिकारिषु ।
न[6] संमतोर्थार्थ्यार्त्तश्च ज्ञानी जिज्ञासुरुत्तमः ॥ ४३ ॥

---

१—मुख्यभक्तेः । २—पुरुषोत्तमे या परा (ज्ञानानन्तरं स्नेहः) सा पराभक्तिरिति स्वप्नेश्वरादयो व्याख्यातारः । ३—उत्तमं प्रेम । ४—श्रीभा.स्कं.३। गुणैर्विषयैरूपरसादिभिर्ज्ञायन्त इति तेषाम्। अनुश्रवो वेदस्तदुदितानि कर्माणि येषां ते देवास्तेषामिन्द्रियाणामित्यर्थः । या सत्वे विष्णौ भगवत्येव एका स्वभावप्रवृत्ता वृत्तिः स्नेह इति यावत्। स चाऽपि निर्हेतुकः स एव भागवती भक्तिः कथ्यते । सा च सिद्धेः सालोक्यादेः श्रेष्ठेति श्लोकद्वयार्थः । ५—गीतायां 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभेति। ६—उत्तमतया नाभिप्रेतः सकामत्वात् ।

'भक्त्या¹ संजातया भक्त्ये'त्येका भक्तिस्तु साधनम् ।
फलात्मिका पराभक्तिर्मा²नसी प्रेमलक्षणा ॥ ४४ ॥
तनुजा वित्तजा सेवा तस्या³ः साधनमु³च्यते ।
सर्वेन्द्रियैः शुद्धभावात्तत्परैः सेवनाऽदि⁴र्मा ॥ ४५ ॥
तदि⁵च्छाप्तैस्स्वसर्वस्वोत्थैस्सेवावैभवैः प⁶रा ।
उभे अपि प्रमाणोक्ते प्रथमं तनुजा यथा ॥ ४६ ॥

'तं⁷मु स्तोतारः पूर्व्यं यथा विद ऋतस्य
गर्भं जनुषा पिपर्त्तन ।
आस्य जानन्तो नाम चिद्विवक्तन
महस्ते विष्णो सुमतिं भजामहे' ।
'क⁸रौ हरेर्मन्दिरमार्जनादिषु' ।
'शावौ करौ नो कुरुतः सपर्याम्' ॥
'वाणी गुणानुकथने श्रवणौ कथायाम् ।'
'करौ च तत्कर्मकरौ मनश्च' ॥
'गृहशुश्रूषणं मह्यं दासवद्यदमायया' ।
'आदरः परिचर्य्यायाम्' ॥

---

१—भागवते—( स्कं. ११. अ. ३. श्लो. ३१. ) भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुमिति । २—मानस्याः । ३—श्रीभागवतादिषु । ४—तनुजा । ५—भगवदिच्छया लब्धैः । ६—वित्तजा । ७—ऋग्वेदे । ८—श्रीभागवते ।

इत्यादौ[1] प्रथमा प्रोक्ता द्वितीया[2]प्युच्यते यथा ।
'सर्वलाभो[3]पहरणं' 'पत्रं[4] पुष्पं फलं' तथा ॥ ४७ ॥
'तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः ।
नृणां येन हि विश्वात्मा प्रीयते हरिरीश्वरः' ॥ ४८॥
'मुकुन्दसेवौपयिकं स्पृहा हि नः' ।
'भर्त्ता[5] सन् भ्रियमाणो बिभर्ति' ।
'योग[6]क्षेमं वहाम्यहम्' ।
इत्यादावपरोक्तैते[7] एकीभूय सुदुर्लभाम् ॥
[8]अकृत्यशेषां कुर्वाते दशमीं प्रेमलक्षणाम् ॥ ४९ ॥
सर्वार्पणात्प्रवृत्तस्य सेवने प्रेम निर्मलम् ।
भवेदेव गुणाम्भोधौ हरौ स्यान्मानसी ततः ॥ ५० ॥
'एवं[10] प्रवृत्तस्य विशुद्धचेतस-
स्तद्धर्म एवात्मरुचिः प्रजायत' इति ।
'इत्य[11]च्युताङ्घ्रिं भजतोऽनुवृत्त्या
भक्तिर्विरक्तिर्भगवत्प्रबोधः' इति ।

---

१—तनुजा । २—वित्तजा । ३—श्रीभागवतस्थमेतत् । ४—'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छती'ति भगवद्वाक्यम् । ५—तैत्तिरीयश्रुतिः। ६—गीता। ७—तनुजवित्तजसेवे। प्रथमाद्विवचनं। ८—नास्ति कर्त्तव्यशेषो यस्यां ताम्। ९—श्रवणादिनवविधभक्तिभ्यः पराम् । १०—श्रीभा. स्कं. १ । ११—स्कं. ११.।

अवान्तरे फले द्वे स्तः प्राङ्मुख्यफलं[1]तोऽन्[2]योः ।
संसारदुःखविलयो [3]बृहदात्मैक्यबोधनम् ॥ ५१ ॥

'न[4] हि भगवन्नघटितमिदं
त्वद्दर्शनान्नृणामखिलपापक्षयः ।
यन्नाम सकृद्ग्रहणात् पुल्कस-
कोऽपि विमुच्यते संसारात्' ॥ ५२ ॥

'अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ।
जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम्' ॥ ५३ ॥

'मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते' ॥ ५४ ॥

इत्युक्तो [5]भक्तितो बन्धनाशो ब्रह्मात्मबोधनम् ।
संसारोऽविद्यया शक्त्या कृतः [6]पूर्वं [7]प्रवृत्तये ॥ ५५ ॥

[8]स्वरूपं विस्मरन् मूढोऽन्[9]तःप्राणेष्विन्द्रिये तनौ ।
क्रमादध्यासतो वेत्ति देवदत्तोऽहमित्यसौ ॥ ५६ ॥

देहसम्बन्धिगेहादौ ममत्वेनानुषज्जते ।
अहंममात्मकस्तर्हि संसार इति बुध्यते ॥ ५७ ॥

---

१—मानसीतः । २—उक्तसेवयोः । ३—अक्षरब्रह्मणा सह जीवाभेदज्ञानम् । ४—श्रीभा. स्कं. ६. चित्रकेतुः । ५—द्विविधसेवातः । ६—सृष्ट्यारम्भे । ७—अन्यथा ब्रह्मांशानामित्थं प्रवृत्त्यसम्भवादितिभावः । ८—स्वरूपाज्ञानमध्यासचतुष्टयञ्चेति पञ्चाविद्यापर्वाणि । ९—अन्तःकरणे ।

सर्वात्मना प्रवृत्तस्य सेवनायां निरन्तरम् ।
देहादीनां तदीयत्वभावनादहं[१]मो हतिः ॥ ५८ ॥

तन्मूलिका तु ममता विहताऽहंकृतेर्हतेः ।
'[२]मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' ॥ ५९ ॥

अविद्यानाश इत्युक्तो भक्तानां स्वप्र[३]पत्तितः ।
संसारकार[४]णलयान्न तस्य[५] पुनरुद्भवः ॥ ६० ॥

अवि[६]द्याकालकर्मादि नैव शक्नोति बाधितुम् ।
एका[७]न्तभक्त्येकनिष्ठं जनमेतदिति स्फुटम् ॥ ६१ ॥

संसारो मायया मिथ्या भ्रमो मध्येऽन्तरायकृत् ।
ब्रह्मज्ञाने जवनिका तन्नाशे ब्रह्मविद्भवेत् ॥ ६२ ॥

सर्पज्ञाने हते रज्जुज्ञानं स्या[८]त्तत्कृतं भयम् ।
नश्येदेव, त[९]थैवेदं श्रीभागवत ईर्य्यते ॥ ६३ ॥

'य[१०]था घनोऽर्कप्रभवोऽर्कदर्शितो
ह्य[११]र्कांशभूतस्य च चक्षुषस्त[१२]मः ।

---

१—अहन्तायाः । २—श्रीभगवद्वाक्यम् । ३—शरणागतितः । ४—अविद्यानाशात् । ५—तस्य संसारस्य । ६—कर्तृपदमिदम् । आदि-शब्देन देशविशेषादयः । ७—एकोऽन्तो निश्चयोऽत्रेति । ८—नश्येदे-वेत्युत्तरेणेदमन्वेति । ९—सर्पस्थाने अहन्ता रज्जुस्थाने अक्षरात्मा जीवः । संसारभ्रमनाशे स्वात्मनि प्रपञ्चे चाक्षरब्रह्मात्मकताप्रतीतिः । १०—श्रीभा. स्कं. ११ अ. ४. श्लो. ३१. ३२. ३३. । ११—सूर्याधिभौतिकरूपस्य । १२—सूर्यदर्शनप्रतिबन्धकः ।

एवं त्वहं[1] ब्रह्मगुणस्तदीक्षितो[2]
ब्रह्मांशकस्यात्मन[3] आत्मबन्धनः ॥ ६४ ॥

घनो यदार्कप्रभवो विदीर्यते
चक्षुः[4] स्वरूपं रविमीक्षते तदा ।
यदा ह्यहंकार उपाधिरात्मनो[5]
जिज्ञासया नश्यति तर्ह्यनुस्मरेत्' ॥ ६५ ॥

'यदैवमेतेन विवेकहेतिना
मायामयाऽहंकरणात्मबन्धनम् ।
छित्त्वाऽच्युतात्माऽनुभवोऽवतिष्ठते
तमाहुरात्यन्तिकमङ्ग संप्लवम्[6]' ॥ ६६ ॥

धामाप्तिः संसृतेर्नाशे ब्रह्मत्वं त्वक्षरात्मता ।
तत्षष्ठे पंचमेऽध्याये द्वादशस्कन्ध उच्यते ॥ ६७ ॥

'तँ[7] एतदधिगच्छन्ति विष्णोर्यत्परमं पदम् ।
अहंममेति दौरात्म्यं न येषां देहगेहयोः' ॥ ६८ ॥

'अहं[8] ब्रह्म परं धाम ब्रह्माहं परमं पदम् ।
एवं समीक्षन्नात्मानमात्मन्याधाय निष्कले' ॥ ६९ ॥

---

१—अहंकारः । २—भगवत्कृतः । ३—जीवस्य । ४—कर्तृ ।
५—भगवतः । ६—आत्यन्तिकसंप्लवो मोक्षः । ७—श्रीभा. स्कं. १२. अ. ६. श्लो. ३३. । ८—श्रीभा. स्कं. १२. अ. ५. श्लो. ११. ।

'उपाधिनाशे विज्ञाने ब्रह्मात्मत्वावबोधने ।
गंगातीरस्थितो[2] यद्वद्देवतां[3] तत्र[4] पश्यति ॥ ७० ॥
तथा कृष्णं परं ब्रह्म स्वस्मिन् ज्ञानी प्रपश्यति ।
इत्युक्तं श्रीमदाचार्यैर्जीवन्मुक्तिरियं परा ॥ ७१ ॥
अक्षरं जानतः सर्वं[5] भवेदक्षररूपता ।
'ब्रह्मविद्ब्रह्मैव भवती'ति श्रुत्या तथोदितम् ॥ ७२ ॥
आनन्दादितिरोभावाज्जीवभावो विचारितः ।
भूयो भक्त्याऽऽनन्दलाभादैश्वर्यादेश्च सम्भवात्॥७३॥
श्रुते[6] 'रसं[7] ह्येवायं लब्ध्वाऽनन्दी भव'त्यतः ।
'अपि[8] वा तमादेशमप्राक्षो येनाश्रुतं
श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम् ।
इति स्याद्ब्रह्मता धामत्वात् कृष्णस्फूर्तिरुज्ज्वला ॥७४॥
स्वयं तदात्मना[9] तेनं[10] प्रपञ्चोऽप्यक्षरात्मकः ।
सर्वोऽपि शक्यते द्रष्टुमबाध्यज्ञानचक्षुषा ॥ ७५ ॥
सर्वं ब्रह्मात्मकं पश्यन् सर्वत्राऽविहता[11] हरेः ।
लीला विलोकयंस्तास्ता न किंचिदपि कांक्षति ॥ ७६ ॥

---

१—सार्धश्लोकोऽयं सिद्धान्तमुक्तावलीस्थः । २—गंगायाः परमभक्तः । ३—मूर्तिमतीं गङ्गाम् । ४—प्रवाहादौ । ५—प्रपञ्चम् । ६—ब्रह्मवल्लीश्रुतेः । ७—अयं तिरोहितानन्दोऽपि जीवो रसं आनन्दरूपं परं लब्ध्वा पुनरानन्दांशवान् भवति । ८—छान्दोग्याष्टमाध्यायश्रुतिः । ९—अक्षररूपेण । १०—जीवन्मुक्तेन । ११—विघातशून्याः ।

'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः' ॥ ७७ ॥

तत्तल्लीलापरं पश्यन् सर्वत्र पुरुषोत्तमम् ।
शब्दांस्तद्वाचकाञ्छृण्वन् सदा चरति निःस्पृहः ॥ ७८ ॥

कृष्णप्रेमामृतास्वादादारभ्यैहिकवैभवम् ।
तृणप्रायाणि गणयन् मोक्षान्तानि सुखान्यपि ॥ ७९ ॥

विकलोऽयं दाम्भिकोऽयं महात्माऽयं हरेर्जनः ।
इति नाना जनोक्तिभ्यो न शोचति न हृष्यति ॥ ८० ॥

सख्या स्वस्वामिना स्वातिप्रियेण हरिणा सदा ।
भगवता सह संलाप, इत्याद्युक्तर्दशां गतः ॥ ८१ ॥

'क्वचिद्रुदन्त्यच्युतचिन्तया क्वचि-
द्धसन्ति नन्दन्ति वदन्त्यलौकिकाः ।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं
भवन्ति तूष्णीं परमेत्य निर्वृताः' ॥ ८२ ॥

---

१—श्रीभा. स्कं. १. अ. ७ श्लो. १० । २—मुनयो मननशीला भगवद्भजनयुक्ताश्च । प्रथमस्कन्धे सूतोक्तिरियम् । ३—अविद्याग्रन्थिरहिताः । ४—विरुद्धांशपरिहारमात्रेण शब्दमात्रं तत्तल्लीलाविशिष्टभगवदभिधायकमवगच्छन् । ५—हेतोः । ६—ऐहिकवैभवं मानुषानन्दमारभ्य । ७—शुष्कज्ञानिमोक्षपर्यन्तानि । ८—वेणुगीतसुबोधिनीस्थगाथोक्तदशाम् । ९—श्रीभा. स्कं. ११. अ. ३. श्लो. ३२. ।

'शृण्वन् सुभद्राणि रथाङ्गपाणे-
　　र्जन्मानि कर्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि
　　गायन्विलज्जो विचरेदसङ्गः ॥ ८३ ॥

एवंव्रतः स्वप्रियनामकीर्त्या
　　जातानुरागो द्रुतचित्त उच्चैः ।
हसत्यथो रोदिति रौति गाय-
　　त्युन्मादवन्नृत्यति लोकबाह्यः ॥ ८४ ॥

खं वायुमग्निं सलिलं महीं च
　　ज्योतींषि सत्वानि दिशो द्रुमादीन् ।
सरित्समुद्रांश्च हरेः शरीरं
　　यत्किञ्च भूतं प्रणमेदनन्यः' ॥ ८५ ॥

गृहीत्वापीन्द्रियैरर्थानित्यारभ्य
　　'स भवति भागवतप्रधान उक्त' इत्यन्तम् ।
'कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम्' ।
　　इयमेव परा भक्तिर्मानसीत्यभिधीयते ॥ ८६ ॥

---

१—श्रीभा. स्कं. ११. अ. २. श्लो. ३९. ४०. ४१. एते त्रयोऽप्यत्र ज्ञेयाः । २—भगवद्व्यतिरिक्तभानशून्यः । ( न विद्यते अन्यो यस्य सोऽनन्यः श्रीकृष्णचरणनिष्ठ इत्यर्थः ) ।

एतत्सिद्धौ पुनः किञ्चित् कर्त्तव्यं नावशिष्यते ।
'चेतस्तत्प्रवणं सेवे'[1]त्याचार्यैर्लक्षणं कृतम्[2] ॥ ८७ ॥
विठ्ठलेशैः संगृहीतं[3] वक्तुं तल्लक्षणं[4] यथा ।
तामेवाह व्रजस्थानां श्रीगोपीजनवल्लभः ॥ ८८ ॥

'ता[5] नाविदन्मय्यनुषङ्गबद्ध-
धियः स्वमात्मानमदस्तथेदम् ।
यथा समाधौ मुनयोऽब्धितोये
नद्यः प्रविष्टा इव नामरूपे' ॥ ८९ ॥

एतत्प्रकारा[6] बहवोऽदर्श्यन्ताऽप्राकृताग्निभिः ।
स्वानुभूत्येकवेद्या सा वक्तुं शक्येत किं मया ॥ ९० ॥
एवं विहरतो देहः पतेद्यदि तदिच्छया ।
परमानुगृहीतस्य देहोऽपि स्यादलौकिकः ॥ ९१ ॥
आत्माऽभिन्नो महानन्दो हरेश्चरणरेणुजः ।
देहमाहादिमस्कन्धे द्विविधं विधिनन्दनः ॥ ९२ ॥

---

१—चेतसस्तस्मिन् भगवति प्रवणं (प्रवणत्वं) सूच्यामिव सूत्रस्य । भगवत्प्रवणं चेत एव सेवेत्यपरे । २—सिद्धांतमुक्तावल्यां कृतम् । ३—ता नाविदन्निति वचनम् । ४—मानसीलक्षणम् । ५—गोप्यः। श्रीभा. स्कं. ११. अ. १२. श्लो. १२. । ६—फलरूपभक्तिप्रकाराः। ७—श्रीमदाचार्यैः । ८—मानसीसम्पन्नस्य । ९—प्राकृताप्राकृतभेदेन । १०—नारदः ।

'प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम् ।
प्रारब्धकर्मनिर्वाणो न्यपतत् पाञ्चभौतिकः' ॥ ९३ ॥
निर्गुणः प्राकृतः सोऽस्माच्छून्य[1]ः पुण्यैश्च पातकैः ।
सगुणात् कर्मबद्धान्नः शरीराद्व्यतिरिच्यते ॥ ९४ ॥
'जहु[2]र्गुणमयं देहं सद्यः प्रक्षीण[3]बन्धनाः' ।
इत्युक्ता निर्गुणप्राप्तिस्तासां सुव्यज्यते यतः ॥ ९५ ॥
सू[4]त्रेष्वेतत् फ[5]लाध्याये स्पष्टत्वेन प्रपंचितम् ।
'विव[6]क्षितगुणोपपत्तेश्च ॥
इत्याद्यध्यायान्तरेऽपि तद्विनिर्णीयते श्रु[7]तेः ॥ ९६ ॥
'परं[8]ब्रह्मैतत् ध्यायति रसति भजति सोऽमृतो भवति' ।
'ब्र[9]ह्मसंस्थोऽमृतत्वमेति' । तं[10]त्संस्थस्याऽमृ[11]तत्वोपदेशात्' ।
'म[12]यि भक्तिर्हि भूतानाममृतत्वाय कल्पते' ।
इत्यादावमृतत्वं त्वप्राकृताकार उच्यते ॥ ९७ ॥

---

१—एतꣳह वाव न तपति किमहꣳ साधु नाकरवं किमहं पापमकरवमितीत्यादिश्रुतिभ्यः । २—श्रीभा. स्कं. १० अ. २९ श्लो. १२ । ३—रासपंचाध्याय्यामन्तर्गृहगता गोप्यः । ४—ब्रह्मसूत्रेषु । ५—तुर्याध्याये चतुर्थपादे । ६—अ. १. पा. २. सु. १. विवक्षिता लोकान्तरे तादृशरूपप्राप्तिः, सा प्रकृतेप्युपपद्यत इत्यर्थः । ७—एवमितः प्रेत्याभिसम्भवितास्मीत्यादिभ्यो विषयवाक्यरूपाभ्यः श्रुतिभ्य इत्यर्थः । ८—आथर्वणश्रुतिः । ९—छान्दोग्यश्रुतिः । १०—संस्था भक्तिः । ११—भक्तिमीमांसासूत्रम् । अ. १. सू. ३. । १२—श्रीभा. स्कं. १०. कुरुक्षेत्रसमागमप्रसंगे ।

दुःखैर्जन्मजरामृत्युमोहसंदोहदोहदैः ।
रहिते महितेऽन्वर्थाऽमृतत्वमिति तत्र वाक् ॥ ९८ ॥
कर्हिचिन्न भवेद्भूयः पर्यावर्त्तोऽस्य संसृतेः ।
आम्रेडितं 'न स पुनरावर्त्तत' इति श्रुतौ ॥ ९९ ॥
'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' ॥ १०० ॥
तत्सेवैकार्हयाऽऽनन्दमय्या निर्दोषया तया ।
भगवद्रूपया तन्वा सेवा सिद्ध्यति सा सदा ॥ १०१॥
निर्गुणा परमा मुक्तिरियमेवाखिलाधिका ।
यथैतदानन्दवल्ल्या तैत्तिरीये तथोच्यते ॥ १०२ ॥
'ब्रह्मविदाप्नोति परम् । तदेषाभ्युक्ता ।
सत्यं ज्ञानमनन्तं ब्रह्म ।
यो वेद निहितं गुहायां परमे व्योमन् ।
सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति' ॥

---

१—ऐहिकजन्मादिकमेव निषिद्धं न त्ववतारवदैच्छिकं तदिति भावः । २—द्विरुक्तम् । ३—छान्दोग्यान्ते । ४—गीतायाम् । ५—अलौकिक्या ब्रह्मरूपया । ६—श्रुतौ 'अस्माल्लोकात् प्रेत्येति' जीवन्मुक्तिव्यावर्तनात्, परा । ७—अक्षरपुरुषोत्तमयोर्ज्ञाता पुरुषोत्तममाप्नोति । ८—पूर्वोक्तमभिमुखीकृत्य व्याख्यानरूपैषा सत्यं ज्ञानमिति ऋगुक्ता । ९—सच्चित्पूर्णं गणितानन्दं देशकालापरिच्छिन्नमक्षरं तत्र निहितं परं च यो वेद स गुहायां हृदि आविर्भूतेऽक्षरधाम्नि पुरुषोत्तमेन सह कामानुपभुङ्क्ते ।

इति मन्त्रेण संक्षिप्य वर्णितं विस्तरात् पुनः ।
समग्रोपनिषत् प्राह बहुनोक्तेन किं मम ॥ १०३ ॥

यच्चरणाब्जनिशरणास्तत्करुणामन्दमकरन्दात् ।
माद्यन्ति दैवमधुपाः स्वीये कृपयन्तु मयि निजाचार्याः॥

निर्गुण[1]मपि गुणपूर्णं तूर्णं वरणा[2]द्विधाय शरणाप्तम् ।
तत्[3]परवन्तं तनुते भगवन्तं भावदः स मे भूयात् ॥१०५

सिद्ध्यत्येतद्धरेरेवानुग्रहादेव केवलम् ।
न साधनान्तरं कर्त्तुं किंचिज्जीवेन शक्यते ॥ १०६ ॥

'ना[4]यमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणु[5]ते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥'
'य[6]स्यामतं तस्य मतं मतं यस्य न वेद सः' ॥
'ना[7]हं वेदैर्न तपसा'
'न[8] रोधयति मां योगो न सांख्यं धर्म उद्धव' ।
इत्यसाधनतामाह साधनानां हरिः स्वयम् ॥ १०७॥

---

१—सत्वादिप्राकृतरहितं ऐश्वर्यादिनिजगुणपूर्णम्। २—अङ्गीकारात्। ३—निर्गुणीकृतभक्तस्याधीनम् । ४—कठमुण्डकयोः । ५—स्वीयतयाङ्गीकरोति । ६—तलवकारोपनिषदि । ७—गीतायाम् । ८—श्रीभा. स्कं. १० अ. १२ श्लो. १ ।

सेवा तु साधनं तन्वाऽस्माभिर्यत्किञ्चिदर्पितम्।
लौकिकं कृपया सेवात्वेन सोऽङ्गीकरोति चेत् ॥१०८॥

'[1]किमासनं ते गरुडासनाय
किं भूषणं कौस्तुभभूषणाय।
लक्ष्मीकलत्राय किमस्ति देयं
वागीश किं ते वचनीयमस्ति' ॥ १०९ ॥

वि[2]भूतये यत उपसेदुरीश्वरीं
न मन्यते स्वयमनुवर्त्तिनीं भवान्।
योगिनामप्यलभ्यस्य सर्वेशस्य परस्य हि।
आत्मपूर्णस्य लाभाय दीनानुग्राहिणः श्रुतौ ॥ ११० ॥

सुगमं साधनं प्रोक्तं सर्वथा शरणागतिः।
त[3]स्यैवाकैतवोपाधिस्वसर्वस्वनिवेदनम् ॥ १११ ॥

'[4]यो ब्रह्माणं विदधाति पूर्वं[5]
यो विद्यास्तस्मै गोपायति कृष्णः।
यस्तं देवमात्मवृत्तिप्रकाशं
मुमुक्षुर्वै शरणमनुव्रजेत्' ॥ ११२ ॥

'श्रीकृ[4]ष्णो वै परमं दैवतम्'। मुं[6]मुक्षुर्वै शरणमहं प्रपद्ये'।

---

१—मानसपूजास्थं वचनमिदं निबन्धे धृतम्। २—श्रीमद्भागवते। ३—भगवत एव शरणागतिः। ४—गोपालपूर्वतापनीये। ५—आरम्भेऽपि। ६—श्वेताश्वतरादौ।

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः'॥११३॥

'[2]तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ।
प्रवृत्तिं च निवृत्तिं च श्रोतव्यं श्रुतमेव च ॥११४॥

मामेकमेव शरणमात्मानं सर्वदेहिनाम् ।
याहि सर्वात्मभावेन यास्यसे ह्यकुतोभयम्' ॥ ११५॥

'ये[3] दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम् ।
हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे'॥११६॥

'इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् ।
दारान् सुतान् गृहान् प्राणान् यत् परस्मै निवेदनम् ॥

स[6] वा अयमात्मा सर्वेषां भूताना-
मधिपतिः सर्वेषां भूतानां राजा ।
'तद्यथा रथनाभौ रथनेमौ चाराः समर्पिताः' ॥

इत्यादिषूदितं तत्र प्रथमं शरणागतिः ।
ततः समर्पणं येनाऽर्प्यमाणांगीकृतिर्भवेत् ॥ ११८ ॥

---

१—श्रीमद्भगवद्गीतायाम् । २—श्रीभा. स्कं. ११. । ३—स्कन्ध. ९ । ४—मह्यं समर्प्य । दानविषयेऽपि त्यागार्थकधातुप्रयोगात् । ५—नवयोगीश्वरप्रसङ्गे । ६—बृहदारण्यके मधुविद्यायाम् । ७—क्रमनियमे हेतुः । शरणागत्यावस्तूनां भगवदंगीकारार्हत्वसिद्धेः ।

एतत्सर्वं हरेस्तोषादि न सिद्ध्येदृते गुरुम्।
अतस्तद्बुद्धिराचार्यं तादृक्षं सततं व्रजेत् ॥ ११९ ॥
'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्। समित्पाणिः
श्रोत्रियं ब्रह्मनिष्ठम् ॥ 'आचार्यवान् पुरुषो वेद'।
'आचार्य चैत्य वपुषा स्वगतिं व्यनक्ति'।
'आचार्यं मां विजानीयात्'।
'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः'॥
'भयं द्वितीयाभिनिवेशतः स्या-
दीशादपेतस्य विपर्ययोऽस्मृतिः।
तन्माययाऽतो बुध आभजेत्तं
भक्त्यैकयेशं गुरुदेवतात्मा' ॥ १२१ ॥
गुरावतुष्टेऽतुष्टाः स्युः सर्वे देवा द्विजोत्तमाः।
तुष्टे तुष्टा यतस्तस्मात् सर्वदेवमयो गुरुः ॥ १२२ ॥

---

१–गुरौ हरिबुद्धिः। २–शास्त्रोक्तलक्षणकम्। ३–मुण्डकोपनिषदि। ४–श्वेतकेतुविद्यायाम्। ५–श्रीभा. स्कं. ११.। ६–श्वेताश्वतरे। तेन 'वेदे कुत्राऽपि भक्तिनाम ने'ति वादिनो पि निरस्ताः। ७–पुरुषोत्तमे। ८–उपनिषत्प्रभृतिषूक्ताः। ९–श्रीभा. स्कं. ११. योगीश्वरप्रसंगे। १०–सर्वशक्तेर्ब्रह्मणः सकाशादुद्गतस्याध्यासचतुष्करूपी विपर्ययः स्वरूपास्मरणञ्च, तन्मायया भवति। ११–पराशरमाधवीयप्रथमाध्याये पुराणसारे।

श्रेयोर्थी यदि गुर्वाज्ञां मनसापि न लंघयेत् ।
गुर्वाज्ञापालको यस्माज्ज्ञानसंपत्तिमश्नुते ॥ १२३ ॥

'पाञ्चे रुष्टे हरस्त्राता हरे रुष्टे हरिस्तथा ।
हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन' ॥ १२४ ॥

इत्यवश्यं व्रजेच्छास्त्रविज्ञवैष्णवसद्गुरुम् ।
निर्णतव्यं मयाऽन्यत्रेदं किंचिदिह दर्श्यते ॥ १२५ ॥

'अवैष्णवोपदिष्टेन मन्त्रेण निरयं व्रजेत् ।
पुनश्च विधिना सम्यग् ग्राहयेद्वैष्णवाद्गुरोः' ॥ १२६ ॥

'महा[1]कुले प्रसूतोऽपि सर्वशास्त्रेषु दीक्षितः ।
सहस्रशाखाध्यायी च न गुरुः स्यादवैष्णवः' ॥१२७॥

'[2]षट्शास्त्रज्ञो भवेद्विप्रो वेदवेदान्तपारगः ।
अवैष्णवो गुरुर्न स्याद्वैष्णवः [3]श्वपचो गुरुः' ॥ १२८॥

इत्यादिवचनैस्तादृग् गुरुं संगम्य ते [4]उभे ।
कुर्वीत कृष्णमन्त्राभ्यां नान्यथा ते भविष्यतः॥१२९॥

'गाण[5]पत्येषु शैवेषु तथा शाक्तेषु सुव्रत ।
सर्वेषु मन्त्रवर्गेषु वैष्णवं श्रेष्ठमुच्यते ।
वैष्णवेषु च मन्त्रेषु कृष्णमन्त्राः फलाधिकाः' ॥ १३०॥

---

१—आदित्यपुराणे । २—सत्सिद्धान्तमार्तण्डादिषु । ३—वैष्णवब्राह्मणादेव शरणादिमन्त्रा ग्राह्या इत्येवंतात्पर्यकोऽर्थवादोऽयम् । ४—भगवतः शरणगमनमात्मनिवेदनञ्च । ५—पुनर्गौतमीयतन्त्रे प्रथमाध्याये ।

'[1]कृष्णमन्त्रविहीनस्य पापिष्ठस्य दुरात्मनः ।
श्वानविष्ठासमं चान्नं जलं च मदिरासमम्' ॥ १३१॥

अष्टोत्तरेण शरणं पंचाक्षर्य्या [2]सपूर्वया ।
गच्छेत् समर्पयेत् सर्वं श्रुतिस्मृत्युद्धृतावि[3]मौ ॥ १३२॥

उद्धाराद्यनयोश्चक्रे गोस्वामिपुरुषोत्तमैः ।
उपदेशादिविषयशङ्कानिरसने स्फुटम् ॥ १३३ ॥

अधिक्रियेत सेवायां सद्गुरोः कृष्णमन्त्रतः ।
वैष्णवः सन् यथा श्रौते गायत्र्यध्ययने द्वि[4]जः ॥१३४॥

'एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ।
मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते' ॥
'मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्' ॥

'किं पुनर्ब्राह्मणाः पुण्या
भक्ता राजर्षयोऽमलाः ।
अनित्यमसुखं लोक-
मिमं प्राप्य भजस्व माम्' ॥ १३७ ॥

---

१—अन्यत्रापि । २—गद्यसहितया । ३—मन्त्रौ । ४—यथा जन्मना शूद्रप्रायोऽपि गायत्रीग्रहणेन द्विजः सन् वेदाध्ययनादावधिक्रियते । ५—एकादशे । ६—कृतात्मनिवेदनानामेव श्रवणकीर्त्तनादिधर्मैर्भक्तिरुद्भवति । ७—गीतायाम् । ८—व्यपाश्रयः शरणागतिः ।

'अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः'॥१३८॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥१३९॥
इति सर्वेऽपि भगवत्सेवायामधिकारिणः ।
ततो गुर्वाज्ञया देवं शुद्धः सेवेत शक्तितः ॥ १४० ॥
'प्रातर्मध्यन्दिने साय विष्णुपूजां समाचरेत् ।
यथा संध्या तथा नित्या विष्णुपूजा स्मृता बुधैः'१४१॥
मन्त्रैः सद्गुरुणा सम्यङ् मूर्त्तावाविष्कृतं हरिम् ।
भजेत् प्रेम्णा सदा तत्तदुपचारैर्महोत्सवैः ॥ १४२ ॥
'पूजनं प्रतिमायां तु उत्तमं परिकीर्तितम्' ।
'मल्लिंगमद्भक्तजनदर्शनस्पर्शनार्चनैः ।
इति प्रक्रम्य हरिणा निरणायीह सेवना' ॥ १४३ ॥
'ममार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यम' ।
गुर्वाज्ञोक्तप्रकारेण सदा सेवेत संस्मरेत् ।
कीर्त्तयेत्तद्भक्तगीतैः सच्छास्त्रैः शृणुयात् परम् ॥१४४॥

---

१—चातुर्वर्णिकाः। २—कालनिर्णयदीपिकायां नारदीये। ३—कालनिर्णयद्दीपिकायां प्रातःकाले इति विष्णुधर्मोत्तरात् । ४—श्री. भा. स्कं. ११. । ५—प्रतिमाशालिग्रामगोमतीचक्रादीनि । ६—प्रतिमादौ । ७—संस्कृतैः प्राकृतैश्च कीर्त्तयेत् । ८—वेदब्रह्मसूत्रभागवतादिशास्त्रैः पुरुषोत्तमं शृणुयात् ।

यथाधिकारं लीलास्ताः क्रमशो भावयन् दृढम् ।
निःसाधनोऽर्पितात्मादिर्दैन्यात् प्राणेश्वरं श्रितः ॥१४५
सर्वदा देहगेहादौ तदेकार्थत्वभावनः ।
'यस्त्[1] आशिष आशास्ते न स भृत्यः स वै वणिक्' ॥
इत्याद्युक्त्या सुनिष्कामो भृत्यभावादकैतवः ।
सर्वलौकिककर्माणि ताटस्थ्येनैव नाटयन् ॥ १४७ ॥
लाभालाभौ समौ कुर्वन् मन्वानस्तद्वशं जगत् ।
विवेक[2]धैर्याश्रयादियुक् सच्चिन्तनतत्परः ॥ १४८ ॥
पुत्रे कृष्णप्रिये प्रीतो न प्रीतस्तत्पराङ्मुखे ।
उदासीने स्वयं कुर्वन् प्रतिकूले गृहं त्यजन् ॥ १४९ ॥
वर्त्तेत वैष्णवाचारैः श्रीमदाचार्यदर्शितैः ।
सप्रमाणैर्गुरोर्भक्तो जिज्ञासुस्तन्मुखाच्छ्रुतेः[3] ॥ १५० ॥
गृहादिबाधकं यत्तत्तत्[4]परत्वेन युंजतः ।
सर्वात्मना च भजतो भवेत् प्रत्युत साधकम् ॥१५१॥

'भ[5]यं प्रमत्तस्य वनेष्वपि स्या-
द्यतः स आस्ते सह षट्सपत्नः ।
जितेंद्रियस्यात्[6]मरतेर्बु[7]धस्य
गृहाश्रमः किं नु करोत्यवद्यम्' ॥ १५२ ॥

१—श्रीभा. स्कं. ७. । २—विवेकस्तु हरिः सर्वं निजेच्छातः करिष्यतीत्यादिना श्रीमदाचार्योक्तो ज्ञेयः । ३—गुरुमुखाच्छ्रुतेः सकाशाच्च । ४—भगवन्मंत्रोपयोगित्वेन । ५—श्रीभा. स्कं. ५— । ६—भगवति भक्तिमतः । ७—अपरोक्षज्ञानिनः ।

'वैष्णवानां[1] हरेरर्चा तपस्या च श्रुतौ श्रुता।
वैष्णवस्त्वं गृहे तिष्ठ कुरु कृष्णपदार्चनम्[2] ॥ १५३॥
अन्तर्बाह्ये हरिर्यस्य किं तस्य तपसा सुत।
नान्तर्बाह्ये हरिर्यस्य किं तस्य तपसा वृथा ॥१५४॥
तपसा हरिराराध्यो नान्यः कश्चन विद्यते।
यत्र तत्र कृतं कृष्णसेवनं परमं तपः' ॥ १५५ ॥
'निवेदिभिः[3] समर्प्यैव सर्वं कुर्यादिति स्थितिः'।
इति निर्वाह आचार्यैरुक्त आहेदमुद्धवः ॥ १५६ ॥
'त्वयो[4]पभुक्तस्रग्गन्धवासोऽलंकारचर्चिताः।
उच्छि[5]ष्टभोजिनो दासास्तव मायां जयेमहि' ॥१५७॥
'एकं[6] एव नारायण आसीत् न ब्रह्मा न द्यावापृथिवी सर्वे देवाः सर्वे पितरः सर्वे मनुष्या विष्णुनाशितमश्नन्ति विष्णुनाघ्रातं जिघ्रन्ति विष्णुना पीतं पिबन्ति विष्णुना रसितं रसयन्ति तस्माद्विद्वांसो विष्णूपहृतं भक्षयेयुरिति'॥
कृष्णाप्रसादभूतं यदन्नं दुष्टस्य संगतिः।
अन्यदेवाश्रयश्चेति सर्वथैतत्त्रयं त्यजेत् ॥ १५८ ॥

---

१–श्रीकृष्णचन्द्रसेवापराणामित्यर्थः। २–उपदेशवादे ब्रह्मवैवत ब्रह्मखण्डीयेद्वादशाध्याये। ३–कृतात्मनिवेदनैः सह सर्वं कुर्यात्। ४–श्रीभा. स्कं. ११. अ. ६.। ५–भगवत्प्रसादः। ६–महोपनिषदि श्रूयते।

'[1]पत्रं पुष्पं फलं तोयमन्नं पानीयमौषधम् ।
अनिवेद्य न भुंजीत यदाहाराय कल्पितम्' ॥ १५९ ॥

'[2]अनर्पयित्वा गोविन्दे यैर्भुक्तं धर्मवर्जितम् ।
शुनो विष्ठासमं चान्नं नीरं च सुरया समम्' ॥ १६० ॥

इत्यन्नं निंद्यते तादृक्[3]संगः सर्वत्र वर्जितः ।
उक्तमस्मद्[4]गुरुश्रीमद्व्रजवल्लभशर्मभिः ॥ १६१ ॥

अग्निवद्भगवद्भावो दुःसंगो जलमेव हि ।
सत्संगव्यवधानेन नाशयेत्तु न चान्यथा ॥ १६२ ॥

'[5]प्रसंगमजरं पाशमात्मनः कवयो विदुः ।
स एव साधुषु कृतो निःसंगत्वाय कल्पते' ॥ १६३ ॥

'[6]रहूगणैतत्तपसा न याति
न चेज्यया निर्वपणाद्गृहाद्वा ।
न च्छन्दसा नैव जलाग्निसोमै-
र्विना महत्पादरजोऽभिषेकम्' ॥ १६४ ॥

'[7]क्षणार्द्धेनापि तुलये न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः' ॥ १६५ ॥

---

१—आचारप्रकाशे भगवत्पूजानिरूपणे ब्रह्माण्डे । २—तत्रैव कौर्मे । ३—अनिवेदितमन्नादि दुष्टानां सङ्गश्च । ४—समर्पणमन्त्रोपदेष्टारोऽस्य कवेर्मातामहा गोस्वामिविशेषाः। ५—श्रीभागवते । ६—श्रीभा. स्कं. ५. । ७—श्रीभा. स्कं. ४. ।

इति सर्वत्र सत्संगः साधनं परमं मतम् ।
देवास्तद्दत्तसामर्थ्यादेकैकामितकामदाः ॥ १६६ ॥
दातुं शक्ता न भक्तिं च मुक्तिमीशोऽपि भोगदः ।
खट्वांगमुचुकुन्दादिभ्यो न मुक्तिं ददुस्ततः ॥१६७॥
अलौकिकः कल्पतरुः स्वाभाविककृपाम्बुधिः ।
प्रावृषेण्यो नवो मेघः सर्वकामाम्बुवर्षणे ॥ १६८ ॥
सेव्यः सदा स एवैकोऽसाम्याधिक्योऽखिलेश्वरः ।
मुकुन्द एव शक्नोति दातुं मुक्तिं स्वसेवनम् ॥ १६९ ॥
वैष्णवानां कृष्ण एव स्वदैवं तदतिक्रमे ।
दोषः, काण्डे द्वितीयेऽस्मिन् संहितायां श्रुतो हि नः ॥
'यो वै स्वां देवतामतियजते । प्रस्वायै दैवतायै च्यवते ।
न परां प्राप्नोतीति । पापीयान् भवतीति ॥
स्वल्पदान् सुलभक्रोधान् दुःखसाध्यांस्तदंशकान् ।
त्यक्त्वा सर्वप्रदं स्वल्पदोषं सेवध्वमंशिनम्' ॥१७१॥
'वासुदेवं परित्यज्य येऽन्यं देवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः' ॥ १७२॥
'अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम्' ॥ १७३ ॥

---

१—भगवद्दत्तशक्तेः। २—शिवः। ३—न तत्समश्चाभ्यधिकश्च दृश्यते । ४—'तीयस्य ङित्सूपसंख्यानम्' इतिवार्त्तिकात् साधुः । ५—अस्माकं तैत्तिरीयाणाम् । ६—पाण्डवगीतायाम् । ७—श्रीभा. स्कं. २. ।

निष्कामोऽपि तदङ्गत्वं मत्वा सेवेत चेद्वृथा ।
'यथा तरोर्मूलनिषेचनेनेति' गतार्थता ॥ १७४ ॥

तस्मादनन्यभावेन तमेवैकं य आश्रितः ।
दैन्यान्निःसाधनं कृष्णः संसारात् किं न मोचयेत् ॥
अभेदाद्भजतो मूर्त्तावेवं संभाषणादिकः ।
साक्षात्कारो भवेत्तस्य भगवान् परवानिव ॥ १७६ ॥

यथा मुरारिदासाद्याः स्वाचार्यकृपयाऽगमन् ।
एतद्रहस्यं परममनुभूयैव बुध्यते ॥ १७७ ॥

न ते चतुर्विधां मुक्तिं वाञ्छन्ति मनसा क्वचित् ।
तदुक्तं हरिणा सेवारसज्ञैरितरैरपि ॥ १७८ ॥

'सालोक्यसार्ष्टिसामीप्यसायुज्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः' ॥१७९॥

मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुः ।
'न योगसिद्धीरपुनर्भवं वा' ।
'नेच्छन्ति सेवया पूर्णाः किमन्यत् कालविद्रुतम्' ।
इति मोक्षेऽप्यनाकांक्षा लौकिके तु कुतस्तराम् ॥१८०॥

---

१—देवानां भगवदवयवरूपत्वम् । २—यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः । प्राणोपहारा च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या । इति भागवताद्युक्तन्यायात् । ३—श्रीकृष्णचन्द्रम् । ४—जीवम् । ५—साक्षाद्भगवानेवाऽयमिति बुद्ध्या । ६—एषामाख्यायिकाश्चरित्रग्रन्थेभ्यो ज्ञेयाः ।

सर्वं ब्रह्मात्मकं तत्र सलीलं पुरुषोत्तमम् ।
पश्यन्नतिदृढस्नेहोऽप्यलक्ष्य[1]चरितोऽभवत् ॥ १८१ ॥

तनु[2]जातः परां भक्तिमहो यान्ति गृहे स्थिताः ।
श्रीमदाचार्यकृपया नान्यथा तपसा वने ॥ १८२ ॥

'अ[3]णोरणीयान् महतो महीया-
नात्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको
धातु[4]ः प्रसादान्महिमानमीशम्' ॥ १८३ ॥

प्रभ[5]वो भ[6]क्तिहेतौ त[7]त्सिद्धिमाहुरनुग्रहात् ।
न साधनैर्जीवकृतैस्तनु[8]जाद्यप्यनुग्रहात् ॥ १८४ ॥

मु[9]ख्यं हि तस्य कारुण्यं भक्तिसूत्रेऽपि वर्णितम् ।
पुष्टि[10]मार्गोऽयमेव स्यात् पोष[11]णं तदनुग्रहः ॥ १८५ ॥

---

१—पश्यन्नपि विक्षिप्तवद्भासमानः । २—शरीरसेवातः ।
३—तैत्तिरीये नारायणोपनिषदि किंचित्पाठभेदेन कठवल्लीषु च पठ्यते ।
४—भगवतोऽनुग्रहात् । ५—प्रभवः श्रीविठ्ठलाचार्याः। ६—ग्रन्थविशेषे ।
७—भक्तिसिद्धिम् । ८—ननु द्विविधसेवातस्तत्सिद्धिः पूर्वमुक्तेति चेत् सत्यं परं तयोरप्यनुग्रहसाध्यत्वादनुग्रहैकनिदानकत्वं भक्तेरक्षतमिति भावः । ९—अ. २. सू. ४९. शांडिल्यसूत्रं मुख्यं निदानम् ।
१०—पुष्टिरनुग्रहस्तत्प्रधानो मार्गः । ११—द्वितीयस्कन्धवचनमिदम् ।

एतादृशस्य भगवदत्यन्तकृपया यदि ।
गृहस्था[1]स्तादृशाः सर्वे तदा न त्याग इष्यते ॥ १८६ ॥
'नि[2]यतं कुरु कर्म त्वं' 'सङ्गं त्यक्त्वा समाचरन्' ।
इति गीतासु निर्णीतं वृत्रो मोक्ष[3]मिमं जगौ ॥ १८७ ॥

'म[4]मोत्तमश्लोकजनेषु सख्यं
संसारचक्रे भ्रमतः स्वकर्मभिः ।
त्वन्माययात्मात्मजदारगेहे-
ष्वासक्तचित्तस्य न नाथ भूयात्' ॥ १८८॥

न [5]चेदेवं त्यजेद्गेहं भजेदेको निजेश्वरम् ।
व्रजेद्यथारुचि स्थानं [6]व्रजे प्रायो वसन्ति ते ॥१८९॥
सर्वत्र वा भ्रमेद्भूमौ सङ्गं कुर्वीत तादृशाम् ।
लोकदृष्ट्यां[7] सुखं दुःखं मित्रवद्धरये वदेत् ॥ १९० ॥
पारतन्त्र्यं भगवतः स्वातन्त्र्यं तस्य जायते ।
तादृशानां दशामाह स्वयं दुर्वाससं हरिः ॥ १९१ ॥
'[8]अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ १९२ ॥

---

१—स्त्रीपुत्रादयः । २—भिन्नवाक्यस्थं पादद्वयम् । ३—स्वगृहे प्रेमपूर्णसर्वचित्तैकाग्र्येण भगवद्गुणगानादिरूपम् । ४—श्रीभा. स्कं. ६. अ. ११. श्लो. २७. । ५—सर्वानुकूल्यं न चेत् । ६—परमभक्ता बहुशो व्रजदेशे विचरन्तीत्यर्थः । ७—मुक्तस्य वस्तुतः सुखदुःखादिद्वन्द्वाभावात् । ८—श्रीभा. स्कं. ९. अ. ४. श्लो. ६३. ६४. ६५. ६६. ६७, ६८, षडेते तत्रत्या ज्ञेयाः ।

'नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ।
श्रियं चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परा ॥१९३॥
ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम् ।
हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥१९४॥
मयि निर्बद्धहृदयाः साधवः समदर्शनाः ।
वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा' ॥
'मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविद्रुतम्' ॥
'साधवो हृदयं मह्यं साधूनां हृदयन्त्वहम् ।
मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि' ॥१९७॥
महानुभावा भाषन्ते जीवन्मुक्तिमिमां पराम् ।
अमृतत्वं परा मुक्तिः स आकारस्त्वलौकिकः ॥१९८॥
आनन्दांशतिरोधाने निराकारत्वमीरितम् ।
पुनस्तदाविर्भवने भवेदप्राकृताकृतिः ॥ १९९ ॥
तेन नास्य परिच्छेदो न भेदो [1]हयहस्तिवत् ।
न ताव[2]न्मात्रताऽऽकारे जरादीनां क्व सम्भवः ॥२००॥
भाष्यादौ स्पष्टमेवैतत्तेन नात्र प्रपञ्च्यते ।
धर्मा[3]विर्भावतो जातेऽक्षरत्वे तत्र[4] लीयते ॥ २०१ ॥

---

१–हयादीनामन्योन्यं भेदवदीश्वराद्भेदो जीवदेहविभागश्च ।
२–कामान्नीकामरूप्यनुसंचरन्नित्यादौ कामरूपत्वश्रवणादाकारे नियतत्वम् । ३–आनन्दस्यैश्वर्यादिधर्माणाञ्च । ४–अक्षरे अंशो जीवः ।

अंशो बृहति तद्धाम्नि जले सैन्धवखिल्यवत् ।
तदोद्धृत्य कृपाम्भोधिः सायुज्येनानुभावयेत् ॥ २०२ ॥

लीलाः सर्वाः सदा देवो गोपानुदधरद्यथा ।
'दर्शयामास लोकं स्वं गोपानां तमसः परम्' ॥ २०३ ॥

'सत्यं ज्ञातमनन्तं यद्ब्रह्म ज्योतिः सनातनम्' ।
'यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः ॥ २०४ ॥

ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः ।
गोस्वामिभिर्गिरिधरै रूपिता रीतिरुद्धृतेः ॥ २०५ ॥

'उद्धृतौ परमः क्लेशो विरहानलसम्भवः ।
यदा देहादिनाशाय समर्थो जायते तदा ॥ २०६ ॥

निजं श्रीमत्कृष्णचन्द्रः स्वाधिकाराऽनुसारतः ।
परमानन्दलीलां स्वामनुभावयति प्रभुः' ॥ २०७ ॥

---

१—लवणशकलवत् । यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयतेत्यादिश्रुतिभ्यः । २—अक्षरात् पृथक्कृत्य । ३—सोश्नुते सर्वान् कामान् सहेति श्रुत्युक्तेन । ४—नित्यक्रीडादिविशिष्टः परः । ५—श्रीभा. स्कं. १०—रासपञ्चाध्यायी । ६—सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुत्युक्तमक्षरम् । ७—अक्षररूपमगाधस्थानम् । ८—'यतो वाच' इत्युक्तोऽगणितानन्दः ।

शुद्धाद्वैतविचारार्के इदं श्लोकद्वयं स्थितम् ।

'संमानबहुमानप्रीतिविरहेतरविचि-
किित्सामहिमख्यातितदर्थप्राणस्थान-
तदीयतासर्वतद्भावाप्रातिकूल्यादीनि
च स्मरणेभ्यो बाहुल्यात्' ।

विरहो भक्तिसूत्रोक्तस्तथाऽतप्ततनुश्रुतेः ॥ २०८ ॥

तापक्लेशौ प्रजायेतां ततोऽसह्यौ यदा तदा ।
क्रमादन्नमयाद्यात्मा विशेद्देहादिपञ्चकम् ॥ २०९ ॥

'सम्पद्याविर्भावः स्वेनशब्दात्'
इत्यादिना सूत्रकृताऽक्षरसम्पत्त्यनन्तरम् ।
आविर्भावः परेच्छातः क्रीडा चोक्ता श्रुतौ मता ॥२१०

अस्माल्लोकात् प्रेत्य लीनोऽक्षरेऽतः पुनरुद्धृतः ।
तनूं चरणरेणूत्थां लब्ध्वा विरहतापितः ।
उपसंक्रम्यान्नमयादीनानन्दमयं परम् ।
कामभोगी कामरूपी कामान् भुंक्ते परेण सः ॥ २११॥

---

१—अ. २. सू. ४४. शाण्डिल्यसूत्रम् । २—अतप्ततनूर्न तदामो अश्नुत इत्यादि । ३—देहमन्नमयः प्राणं प्राणमयो मन इन्द्रियाणि च मनोमयस्तेन तेषां तत्तदात्मकत्वं जीवोऽक्षरात्मकत्वाद्विज्ञानमय आनन्दमयः परः सहाशिता पुरुषोत्तमः स्वतन्त्रः । ४—अ. ४. पा. ४. सू. १. । ५—भगवता ।

तैत्तिरीये ब्रह्मभृगुवल्ल्योः सूत्रेषु च स्फुटम् ।
सर्वोपनिषदश्चाहुः शक्तो वक्तुं न मादृशः ॥ २१२ ॥

नातः परतरं किञ्चिन्नावृत्तिर्न गुणोद्भवः ।
इदं[1] श्रीवल्लभाचार्यकृपयैवान्यथा नहि ॥ २१३ ॥

दैवोद्धारप्रयत्नात्मा भगवद्वदनानलः ।
तस्याज्ञया प्रादुरासीद्वस्तुतः कृष्ण एव सः ॥ २१४ ॥

चरित्रचिन्तामण्यादौ पाद्मादिवचनैर्दृढम् ।
'सर्वाचार्यकथापूर्वं[1] निर्णीतं चानुभूयते[2] ॥ २१५ ॥

नमो ब्रह्मणे नमोऽस्त्वग्नये
नमः पृथिव्यै नम औषधीभ्यः' ।
'नमो वाचे नमो वाचस्पतये
नमो ब्रह्मणे बृहते करोमि' ॥ २१६ ॥

ब्रुवन्तीत्यादयो वेदास्तत्स्वरूपं[3] सनातनम् ।
इति श्रुतिरहस्ये[4] तत्प्रकाशादिषु निश्चयः ॥ २१७ ॥

प्रसंगाद्वैष्णवाचारा विविच्यन्तेऽत्र केचन ।
धारयेत् सर्वदा मालामामन्त्रग्रहणाद्गुरोः[5] ॥ २१८ ॥

---

१—कथापूर्वकम् । २—अद्यापि तन्नामजपादिभ्यो यथोक्तफलात् । ३—श्रीमदाचार्यस्वरूपम् । ४—गोस्वामिश्रीगिरिधरैः कार्श्यैः कृते ग्रन्थे । ५—मन्त्रग्रहणमारभ्य ।

तुलसीकाष्ठजां कण्ठे क्षणार्धं न त्यजेत्तथा ।
तन्मार्गशीर्षमाहात्म्ये स्कान्दे प्रावोचदच्युतः ॥२१९॥

'तुलसीकाष्ठजां मालां कण्ठस्थां[1] वहते तु यः ।
अप्यशौचोऽप्यनाचारो मामेवैति न संशयः ॥ २२०॥

धारयन्ति न ये मालां हैतुकाः पापबुद्धयः ।
नरकान्न निवर्त्तन्ते दग्धाः कोपाग्निना मम' ॥ २२१ ॥

इत्यवधारणतः प्रत्यवायान्नित्यत्वमीरितम् ।
मरणावसरेऽप्येषा न त्याज्या मोक्षदायिनी ॥ २२२ ॥

'हरिनामा[2]क्षरमुखं भाले गोपीमृदांकितम् ।
तुलसीमालिकोरस्कं न स्पृशेयुर्यमोद्भटाः' ॥२२३॥

'निवेद्य[3] केशवे मालां तुलसीकाष्ठसंभवाम् ।
वहन्ति ये नरा भक्त्या तेषां वै नास्ति पातकम्' ॥

'तदा प्रीतमनास्तस्मिन् कृष्णो देवकिनन्दनः ।
तुलसीकाष्ठसम्भूतं शिरोबाहुविभूषणम्' ॥ २२५ ॥

तुलसीकाष्ठमालां तु प्रेतराजस्य दूतकाः ।
दृष्ट्वा नश्यन्ति दूरेण वातोद्धूतं यथा रजः ॥ २२६ ॥

---

१—सदैव कण्ठे स्थितां । अन्यथा कण्ठे वहत इत्येव वदेत् । वचनमिदं विष्णुधर्मोत्तरेप्यस्ति । २—श्रीकाशीखण्डे एकोनविंशाध्याये । ३—गारुडे मार्कण्डेयः ।

तुलसीकाष्ठसम्भूते माले कृष्णजनप्रिये ।
बिभर्मि त्वामहं कण्ठे कुरु मां कृष्णवल्लभम् ॥२२७॥

तुलसीदलजा माला निषिद्धा कालपञ्चके[1] ।
हारीतेन[2] शिवः पाद्मे विधत्ते तद्धृतिं[3] सदा ॥ २२८ ॥

स्नानकाले तु यस्याङ्गे दृश्यते तुलसी शुभा ।
गङ्गादिसर्वतीर्थेषु स्नातं तेन न संशयः ॥ २२९ ॥

तुलसीमालिकां धृत्वा यो भुंक्ते गिरिनन्दिनि ।
सिक्थे सिक्थे स लभते वाजपेयफलं शुभम् ॥२३०॥

बहुना किमिहोक्तेन शृणु त्वं वरवर्णिनि ।
विडुत्सर्गादिकालेऽपि[4] न त्याज्या कण्ठमालिका ॥२३१॥

यत्कण्ठे[5] तुलसी नास्ति ते नरा मूढमानसाः ।
अन्नं विष्ठा जलं मूत्रं पीयूषं रुधिरं भवेत् ॥ २३२ ॥

ततः सर्वेषु कालेषु न त्याज्या कण्ठमालिका ।
क्षणार्द्धं तद्विहीनोऽपि विष्णुद्रोही न संशयः॥ २३३ ॥

'तुलसीकाष्ठमालां यो धृत्वा[6] भुंक्ते द्विजोत्तमः ।
सिक्थे सिक्थे स लभते वाजपेयफलं मुने' ॥२३४॥

---

१—स्नानभोजनमैथुनमलमूत्रविसर्जनकालेषु । २—स्वस्मृतौ । ३—स्नानभोजनादिकालेष्वपि तत्काष्ठमालाधृतिम् । ४—आदिपदान्मैथुनमूत्रोत्सर्गादिसंग्रहः । ५—तथा ।

"[1]तुलसीकाष्ठमालां यो धृत्वा स्नानं समाचरेत् ।
पुष्करे च प्रयागे च स्नातं तेन मुनीश्वर" ॥ २३५ ॥

'[2]यज्ञोपवीतवद्धार्या कण्ठे तुलसिमालिका ।
नाशौचं धारणे तस्या यतः सा ब्रह्मरूपिणी' ॥२३६॥

पूजांगं शंखचक्रादि गोपीचन्दनमृत्स्नया ।
कुर्यान्निषेधस्तत्प्रायः पूजाशून्ये क्वचिन्मृदः ॥ २३७ ॥

'गोपीचन्दनमुद्रां[3] च कृत्वा भ्रमति भूतले ।
सोऽपि देशो भवेत् पूतः किं पुनर्यत्र संस्थितः' २३८

'[4]कृष्णनामाक्षरैर्गात्रमंकयेच्चन्दनादिना ।
स लोकपावनो भूत्वा तस्य लोकमवाप्नुयात्' ॥२३९॥

'ममावतारै[5]श्चिन्हानि दृश्यन्ते यस्य विग्रहे ।
मर्त्यो मर्त्यो न विज्ञेयः स नूनं मामकी तनुः' ॥२४०॥

'कृष्णा[6]युधांकिते देहे तोयचन्दनमृत्स्नया ।
प्रयागादिषु तीर्थेषु स गत्वा किं करिष्यति' ॥२४१॥

'यदा यदा प्रपश्येत देहं शंखादिचिन्हितम् ।
तदा तदा जगत्स्वामी तुष्टो हरति पातकम्' ॥२४२॥

---

१—श्रीस्कान्दपुराणे । २—तत्रैव । ३—आचारप्रकाशे ऊर्ध्वपुण्ड्रविधौ हलायुधीये । ४—पाद्मपुराणे । ५—तथा श्रीमद्भगवद्वचः । ६—नीलकण्ठान्हिके च सनत्कुमारः ।

'गोपीचन्दन[1]मृत्स्नाया लिखितं यस्य विग्रहे ।
शंखचक्रगदापद्मं तस्य देहे भवाम्यहम्' ॥ २४३ ॥

सौवर्णं राजतं ताम्रं कांस्यं मृण्मयमेव वा ।
चक्रं कृत्वा तु मेधावी धारयेत विचक्षणः ॥ २४४ ॥

उपवीतादिवद्धार्याः शंखचक्रगदादयः ।
ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥ २४५ ॥

इत्थं विधीयते मुद्रा मृन्मयी धातुचक्रतः ।
द्विजानामपि धर्मोऽयमुपवीतातिदेशतः ॥ २४६ ॥

'च[2]क्रलांछनहीनस्य विप्रस्य विफलं भवेत् ।
क्रियमाणं च यत्कर्म वैष्णवानां विशेषतः' ॥२४७॥

इत्यावश्यकता स्कान्दे वर्णिता विप्रधर्मता ।
प्रस्तुत्य मृन्मयीं मुद्रां पूजांगत्वं यथोदितम् ॥ २४८॥

शंखचक्रादिरहितः पूजां यस्तु समाचरेत् ।
निष्फलं पूजनं तस्य हरिश्चापि न तुष्यति ॥ २४९ ॥

यस्तु संतप्तशंखादिलिङ्गाङ्कितनुर्नरः ।
स सर्वयातनाभोगी चाण्डालो जन्मकोटिषु ॥ २५० ॥

---

१—पाद्मे श्रीभगवान् । २—मार्गशीर्षमाहात्म्ये तृतीयाध्याये ।

इदं बृहन्नारदीयं पृथ्वीचन्द्रोदये स्थितम् ।
अङ्कनं[1] तप्तमुद्रा स्याच्छूद्रतांत्रिकयोश्च सा ॥ २५१ ॥

ऊर्ध्वपुण्ड्रन्तु भगवत्प्रसादद्रव्यतो मतम् ।
वैष्णवानां च शैवानां द्विजानां नित्यमुच्यते ॥२५२॥

'याँगो[2] दानं तपो होमः स्वाध्यायः पितृतर्पणम् ।
भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम्' ॥२५३॥

'ललाटे[3] तिलकं कृत्वा कुर्युः शैवाश्च वैष्णवाः ।
तर्पणं चापि वै श्राद्धमन्यथा निष्फलं भवेत्' ॥२५४॥

'ऊर्ध्वपुण्ड्रं[4] शिवस्यैवं विष्णोः कुर्युश्च वा बुधाः ।
मूर्ध्नि मूलेन मन्त्रेण शेषं द्वादशनामभिः' ॥ २५५ ॥

'ऊर्ध्वपुण्ड्रं[5] द्विजातीनामग्निहोत्रसमो विधिः ।
इत्यावश्यकता सिद्धा सर्वथा सान्तरं तु तत्' ॥२५६॥

'एकान्तिनो[6] महाभागाः सर्वभूतहिते रताः ।
सान्तरालं प्रकुर्वन्ति पुण्ड्रं हरिपदाकृतिम्' ॥ २५७॥

---

१—नाङ्कनं विद्महे वेदपन्थानमाश्रित इत्यादौ वृषोत्सर्गादौ तथा प्रसिद्धेः । २—मदनपारिजाते च ब्राह्मे । ३—स्कान्दे । उर्ध्वपुण्ड्र-विधिं प्रक्रम्य । ४—आचारमयूखे च शौनकः । ५—धर्मप्रवृत्तौ स्मृतिसारसमुचये । ६—इत्यादि पाद्मे ऊर्ध्वपुण्ड्राध्याये ।

'ऊर्ध्वपुण्ड्रन्तु सर्वेषां न निषिद्धं कदाचन ।
धारयेयुः क्षत्रियाद्या विष्णुभक्ता भवन्ति ये' ॥२५८॥

इति सर्वेषु वर्णेषु वैष्णवानां तदीरितम् ।
निषिध्यते शिवेनैव पाद्मे भस्मत्रिपुण्ड्रकम् ॥ २५९ ॥

'विप्राणां नैव धार्यं स्यात्तिर्यक्पुण्ड्रादिधारणम् ।
नारायणात्परब्रह्मादन्येषामर्चनं न हि ॥ २६० ॥

ब्राह्मणः कुलजो विद्वान् भस्मधारी भवेद्यदि ।
वर्जयेत्तादृशं देवि मद्योच्छिष्टं घटं यथा ॥
त्रिपुण्ड्रं शूद्रकल्पानां शूद्राणां च विधीयते ।
त्रिपुण्ड्रधारणाद्विप्रः पतितः स्यान्न संशयः' ॥ २६१ ॥

त्रिपुण्ड्रस्य[१] विधिः शैवे[२] निषेधः सर्ववैष्णवे ।
अवैदिके तु शैवे वा तानि[३] द्वादशनामभिः[४] ॥ २६२ ॥

अत आवश्यकं मालामुद्रावत्तिलकं शुभम् ।
तत्पाद्म उत्तरे खण्ड एकीकृत्य प्रशंसितम् ॥ २६३ ॥

---

१—उभयत्र वैषयिकमधिकरणं जात्यभिप्रायादेकवचनं सर्वे वैदिकाः(?)। २—शिवपूजादिकर्मभेदादिच्छातश्च तिर्यगूर्ध्वपुण्ड्रयोर्विकल्पः। ३—ऊर्ध्वपुण्ड्राणि । ४—"ललाटे केशवं विद्यान्नारायणमथोदरे" इत्यादिनोक्तैर्बहुग्रन्थप्रसिद्धैः ।

'ये[1] कण्ठलग्नतुलसीनलिनाक्षमाला
ये बाहुमूलपरिशोभितशंखचक्राः ।
ये वा ललाटफलके लसदूर्ध्वपुण्ड्रा–
स्ते वैष्णवा भुवनमाशु पवित्रयन्ति' ॥२६४॥

त्रयमेकैकवादेन निबन्धस्यानुसारतः ।
पुरुषोत्तमपादैः सप्रमाणौघं दृढीकृतम् ॥ २६५ ॥

तथा श्रुतिरहस्यादौ मयाऽप्यन्यत्र[2] वारितः ।
संशयस्तिलकद्रव्ये रुद्राक्षस्याप्यधारणे ॥ २६६ ॥

आचारैरीदृशैः शुद्धैः श्रौतैः स्मार्तैः पुराणजैः ।
सदाचारागतैः शुद्धः सेवेतोक्तप्रकारतः ॥ २६७ ॥

लीलास्वादोऽनुभूत्येकवेद्योस्य स्यादनुग्रहात् ।
ब्रह्मादिभिः प्रार्थ्यमानोऽप्येषामत्यन्तदुर्लभः ॥२६८॥

न स्वप्नेप्यक्षरजुषां केवलज्ञानिनामयम् ।
मन्वते परमं मोक्षं ब्रह्माऽहंभानमेव ते ॥ २६९ ॥

अहं ब्रह्मेति संसिद्धावक्षरत्वं भविष्यति ।
न तेऽक्षरात् परं कंचिज्जानन्ति पुरुषोत्तमम् ॥ २७०॥

---

१–अध्यायः १० । २–ग्रन्थान्तरेषु । इदानीं सत्सिद्धान्तमार्तण्डेऽप्ययं विषयोऽनेन कविना सम्यङ्निर्णीतः ।

इत्यात्मलाभसन्तुष्टाः सात्त्विका भक्तिवर्जिताः[1] ।
लीयन्ते तेऽक्षरे ज्ञानघने सर्वे चिदंशकाः[2] ॥ २७१ ॥

नावर्त्तन्ते पुनर्मग्नाः सुखे संसुप्तवत्ततः ।
ददाति भगवान् प्रायो मुक्तिं भक्तिः सुदुर्लभा ॥२७२॥

'भगवान् भजतां मुकुन्दो मुक्तिं
ददाति कर्हिंचित् स्म न भक्तियोगम्' ।
'अनिच्छतो गतिमण्वीं प्रयुङ्क्ते' ॥

भक्तस्य कृष्णसायुज्याद्रसपानं तटस्थवत्[3] ।
भगवज्ज्ञानिनां नैतत्[4]तापशान्तिर्द्वयोः[5] फलम् ॥ २७३ ॥

इति श्रीवल्लभाचार्यचारुभास्वद्विकासितम् ।
सिद्धान्ताब्जं भजध्वं भो दैवभृंगा रसार्थिनः[6] ॥२७४॥

बालानां बोधनायेह दिङ्मात्रं दर्शितं मया ।
प्राक्तनेषु प्रबन्धेषु विस्तरस्तु विलोक्यताम् ॥ २७५ ॥

तदुच्छिष्टोपभोगेन शुद्धबुद्धेर्ममापि ये ।
चन्द्रोदयादयो ग्रन्था अनुगृण्हीत तानपि ॥ २७६

---

१—न तु निर्गुणाः सत्वात्संजायते ज्ञानं कैवल्यं सात्विकं ज्ञानमित्यादिवचोभ्यः । २—जीवाः । ३—जलं पिबतस्तीरस्थस्येव । ४—रसास्वादनम् । ५—भक्तज्ञानिनोः संसारतापस्य तटस्थनिमग्नयोर्ग्रीष्मतापस्य च शान्तिः । ६—रसो भक्तिः पुरुषोत्तमो वा पक्षे मकरन्दः ।

प्रथमे प्रकरणे यत्प्रोक्तं संक्षिप्य तत् पुनः ।
प्रपञ्चितं प्रकरणैश्चतुर्दशभिरुज्ज्वलम् ॥ २७७ ॥

पीनपयो[1]धरकान्तौ सद्[2]वृन्दावनविलासरुचौ ।
राधायां श्रीकृष्णे रचय रतिं[3] दर्प[4]कोपमानपदे ॥२७८॥

नोल्लासिते न[5] दीने कृतेऽपि भङ्गे न वा[6]रिजातानाम् ।
द्विज[7]राजशब्दभाजो नमामि स[8]दिनोदयान्निजाचार्यान्२७९

श्रीमद्भक्तिसुधाब्धिवर्धनविधौ सम्पूर्णचन्द्रायितं
दुर्वादोत्कटकुम्भिदम्भदलने शार्दूललीलायितम् ।
पादाब्जं भजतामशेषविदुषां मस्तेषु मालायितं
यैर्वाचो विसरा जयन्ति रुचिरास्ते विठ्ठलेशप्रभोः २८०

यः श्रीमद्व्रजवल्लभाभिधगुरोः स्पृष्टः कृपादृष्टिभि-
र्बाल्येऽगान्निखिलागमांश्च निपुणं ताताद्घनश्यामतः ।

---

१—कुचौ मेघाश्च । २—समीचीनं वृन्दावनं सतां वृन्दस्यावनं रक्षणञ्च । ३—भक्तिम् । ४—रूपादिगर्वरोषप्रणयकलहानां दर्पकस्य कामस्योपमायाश्च । ५--नदीपतौ समुद्रे वस्तुतस्तु दैन्यवानेवोल्लासितो न त्वदीनः । ६--कमलानां वस्तुतस्त्वर्वाचीनदुर्वादरूपवैरिसमूहानाम् । ७--चन्द्रो ब्राह्मणश्रेष्ठश्च । ८--दिवसे य उदयस्तत्सहितानीति विरोधो वस्तुतस्तु सतां वेदानामिनस्य हरेरुदयः कलौ प्रकाशो येभ्यस्तान् । आत्रेयगोत्रे जातेन गोपीनाथांगजन्मना । देवकीनन्दनाख्येन गोवर्द्धनगुरोर्मुखात् ॥ अधीत्य तत्कृतं ग्रन्थं स्वस्यैव स्मृतये मया । द्रुतं कृतं स्फुटं सूक्ष्मं सरलं टिप्पणं शुभम् ॥ श्रीरस्तु ।

तूर्णं वर्णयते बहूनि युगपच्छ्रोत्रिष्टवस्तूनि यो
नानाकाव्यनिबन्धकृत्स समभूद्गोवर्द्धनाख्यः कविः २८१

पंचनदान्वयजनुषा
तेनाऽन्धेनापि सत्कृपैकदृशा ।
भूँदृशिदुर्गांशशिमित–
विक्रमवर्षे व्यधायि पञ्चदशी ॥ २८२ ॥

यो गोवर्द्धनवाक्सुधोदधिभवः सद्वांछितार्थप्रदः
स्वान्तध्वान्तनिवारको गुरुघनश्यामोक्तिशाणोज्ज्वलः ।
विद्वद्भिः करुणापरैर्हृदि धृतः सोऽयं महीमण्डले
यावच्चन्द्रदिवाकरं विजयतां वेदान्तचिन्तामणिः२८३

इति श्रीमद्वेदव्यासविष्णुस्वामिमतपुण्डरीकमण्डलमण्डनमा-
र्तण्डश्रीमद्वल्लभाचार्यचरणाब्जचञ्चरीकचित्तेन मोक्षगुरु-
स्वमातामहगोस्वामिश्रीव्रजवल्लभचरणैकतानेन तैल-
ङ्गवेल्लनाटीज्ञातीयतित्तिरिशाखीयापस्तम्बबाधूल-
सगोत्रोद्भवपंचनद्युपनामकघनश्यामभट्टात्म-
जेन स्वपितृसकाशाल्लब्धविद्येन श्रीगोवर्द्ध-
नाऽऽशुकविना कृते वेदान्तचिन्ताम-
णौ साधनफलादिविवेको नाम
पंचदशं प्रकरणं सम्पूर्णम् ॥

समाप्तश्चाऽयं वेदान्तचिन्तामणिः ॥

---

१–१९२१ तमे वर्ष इत्यर्थः ।

# टिप्पणकर्तुः परिचयः ।

आसन्नाङ्गिरसायास्यगौतमप्रवरान्वये ।
तैत्तिरीयां कृष्णयजुस्तरोः शाखामधीतिनः ॥ १ ॥

देवर्षिकविराजादिपदवीसमलङ्कृताः ।
श्रीकृष्णप्रमुखा विप्रा आमेरेश्वरसेविताः ॥ २ ॥

तेषां वंश्यो जयपुरीवास्तव्यो भट्टसत्तमः ।
श्रीमँल्लक्ष्मीनाथ इति प्रथितो गुरुभिर्गुणैः ॥ ३ ॥

तदात्मजः श्रीद्वारकानाथः शीलनिधिः सुधीः ।
कृष्णाङ्घ्रिमधुपस्तस्य रमानाथः कविः सुतः ॥ ४ ॥

गोस्वामिश्रीगोकुलेन्दोः कृपापाङ्गसमाश्रितः ।
तेन चिन्तामणेः प्राचां टिप्पणं विशदीकृतम् ॥ ५ ॥